C. 12. 12591 B. 12. 333(2). 15 K. 12. 340. 15

ऋषयश्चैव संसिद्धाः परं विस्मयमागताः ॥ १५
अन्तरिक्षचरः कोऽयं तपसा सिद्धिमागतः ।
अधःकायोर्ध्ववक्त्रश्च नेत्रैः समभिवाह्यते ॥ १६
ततः परमधीरात्मा त्रिषु लोकेषु विश्रुतः ।
भास्करं समुदीक्षन्स प्राङ्मुखो वाग्यतोऽगमत् ।
शब्देनाकाशमखिलं पूरयन्निव सर्वतः ॥ १७
तमापतन्तं सहसा दृष्ट्वा सर्वाप्सरोगणाः ।
संभ्रान्तमनसो राजन्नासन्परमविस्मिताः ।
पञ्चचूडाप्रभृतयो भृशमुत्फुल्ललोचनाः ॥ १८
दैवतं कतमं ह्येतदुत्तमां गतिमास्थितम् ।
सुनिश्चितमिहायाति विमुक्तमिव निःस्पृहम् ॥ १९
ततः समतिचक्राम मलयं नाम पर्वतम् ।
उर्वशी पूर्वचित्तिश्च यं नित्यमुपसेवते ।
ते स्म ब्रह्मर्षिपुत्रस्य विस्मयं ययतुः परम् ॥ २०
अहो बुद्धिसमाधानं वेदाभ्यासरते द्विजे ।
अचिरेणैव कालेन नभश्चरति चन्द्रवत् ।
पितृशुश्रूषया सिद्धिं संप्राप्तोऽयमनुत्तमाम् ॥ २१
पितृभक्तो दृढतपाः पितुः सुदयितः सुतः ।

---

5–7 गृहाः सप्तर्षयः सर्वे. — b) Bo M1. 5. 6 गंधर्वाः सा- (Bo °र्वाश्चा )प्सरोगणाः. — e) G3 M1. 5–7 सिद्धाश्च (for संसिद्धाः).

16 a) K6 Bo. 6, 7, 9 Da3 अंतरीक्षचरः ( Bo °ताः ); B8 Da4 Dn1. n4 Ds D2, 3, 8 अंतरि( B8 Ds1 °री )क्षगतः. — b) K1 तपसः. — c) K6 T2 -[ऊ]र्ध्ववक्त्रैश्च. ❀ Ca: स्वर्गाद्भ्रष्टोचितस्याधोवक्त्रता यतस्ततः सिद्धोऽयमिति व्यञ्जितम् । Cn: अधः कायात् ऊर्ध्वं वक्त्रं यस्य, सूर्ये दत्तदृष्टिरतः स्वदेहस्याधोभागं न पश्यतीत्यर्थः । ❀ — d) K6. 7 Da3. a4 Ds2 D6. 9 ( before corr. ) नेत्रैः समभिवीक्ष्यते; Bo Dn1. n4 Ds1 D2. 3. 8 °भिरज्यते; B6. 7. 9 D7. 9 ( by corr. ) °भिवीक्षते; B8 °वकृष्यते; D4 °तिवीक्षते; T G1–3. 6 M5 °तिवाह्यते; M1. 6. 7 °तिवाभ्यते.

17 a) K6 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 -धर्मात्मा ( for -धीरात्मा ). — b) Ś1 K1. 2. 4 तथा ( for त्रिषु ). D4. 5 विश्रुताः. — c) Ś1 ( before corr. ) K2 समुदीरन् ( for °दीक्षन् ). Da3. a4 स्वः ( for स ). — d) K1 वाच्यतो; Da4 वागतो; D4 वाक्यतो; D6. 7 वामतो ( for वाग्यतो ). K1 [ऽ]गमन्. — e) Da4 [आ]कारम् ( for [आ]काशम् ). B9 अणुलं ( for अखिलं ). — f) Da3. a4 पूरयन्नेव; D5. 7 °यामास ( for °यन्निव ). K7 Bo. 8. 9 Dn1. n4 Ds D2–5. 8. 9 M5 सर्वशः; M1. 6. 7 चादिना; M5 ( *inf. lin.* ) नादिना ( for सर्वतः ).

18 a) D5. 7 तमागतं समासाद्य. — b) K7 D4 सर्वाप्सरागणः; Bo देवाप्सरोगणाः. Da4 दृष्ट्वा सर्वेश्वरो गणाः. — d) Da3. a4 Ds2 -विस्मितः. — e) Ś1 K1. 2. 4 पंचचूलप्रभृतयो; K6 शंखचूडा°; T2 G2 M1. 5–7 पंचचूला°. — f) K2 दृशम् ( for भृशम् ). K2. 4 Da4 -लोचनं ( Da4 °ना ).

19 a) Da4 D4 G2 देवतं. Ś1 K1. 2 कतमो. K7 D4. 5. 7. 9 T2 G1. 3 M1. 5–7 त्वे( T2 न्वे; G1 चै )तद् ( for ह्येतद् ). T1 G6 दैवतं कतमत्वेन. — b) D5 G2. 3 आस्थितां ( G2 °ताः; G3 °तः ). — c) D5. 7 स्वनिश्चितम् ( for सु° ). Ds1 D4. 5. 7. 9 इव ( for इह ). D5. 7 [आ]यांतं ( for [आ]याति ). — d) K7 D4. 9 T G2. 6 M1. 5–7 निर्मु( D9 °यु )क्तम् ( for विमुक्तम् ). Ś1 K1. 2. 4 G2. 3 इह ( for इव ). G1 ( before corr. ). 2 निःस्पृहः.

20 a) K7 B6–8 Da3 Dn1. n4 Ds D2–5. 7–9 ततः समभिचक्राम. — b) K7 D2–5. 7. 9 M1. 5–7 मंदरं ( for मलयं ). — c) T2 पूर्वचित्तेश्च ( for °चित्तिश्च ). — d) K1 यो; G3 तं ( for यं ). Bo. 9 Dn1. n4 Ds2 D2. 3. 8 M1. 5–7 उपसेवतः. — e) Bo. 7 Dn1. n4 Ds D2. 3. 5. 7 तस्य; D8 तेस्य; T2 तन्मे ( for ते स्म ). Ds1 विप्रर्षि- ( for ब्रह्मर्षि- ). — f) D5. 7 T G1–3. 6 जग्मतुः ( for ययतुः ).

21 a) M1. 6 विद्धि ( for बुद्धि- ). T1 G6 -समाचारं ( for °धानं ). — b) K7 D4. 9 यदाभ्यास-; Bo सदा° ( for वेदा° ). K7 D4. 9 T G3. 6 -रतो ( for -रते ). K7 D4. 9 T G3. 6 द्विजः; G1 द्विजं ( for द्विजे ). G2 देवाभ्यां सुलभे द्विजः. — c) T G1–3. 6 हि ( for [ए]व ). — d) G2. 3 न भयं याति ( G3 रवि- ) चंद्रवत्; M5 ( *sup. lin.* ) जगद्व्याप्स्यत्यसंशयं. — e) K1 सिद्धि-; K4 Da3. a4 वृद्धिं; K6 Bo. 6 ( marg. as in text ). 7–9 Dn1. n4 Ds D2. 3. 8 T2 बुद्धिं ( for सिद्धिं ). — f) K1 समाप्तो ( for संप्राप्तो ). G2 [ऽ]सौ ( for ऽयम् ). K1. 2 Ds1 अनुत्तमं ( for °त्तमाम् ).

22 a) Ds2 दृढतया ( for °तपाः ). G2 पितृभक्तौ दृढा सिद्धिस्. — b) K6 G3 च ( G3 स ) दयितः; D7 T1 G6 समधिकः ( for सुदयितः ). G2 तया समुदितः सुतः. — After 22ab, G2 ins.;

अनन्यमनसा तेन कथं पित्रा विवर्जितः ॥ २२
उर्वश्या वचनं श्रुत्वा शुकः परमधर्मवित् ।
उदैक्षत दिशः सर्वा वचने गतमानसः ॥ २३
सोऽन्तरिक्षं महीं चैव सशैलवनकाननाम् ।
आलोकयामास तदा सरांसि सरितस्तथा ॥ २४
ततो द्वैपायनसुतं बहुमानपुरःसरम् ।
कृताञ्जलिपुटाः सर्वा निरीक्षन्ते स्म देवताः ॥ २५
अब्रवीत्तास्तदा वाक्यं शुकः परमधर्मवित् ।
पिता यद्यनुगच्छेन्मां क्रोशमानः शुकेति वै ॥ २६
ततः प्रतिवचो देयं सर्वैरेव समाहितैः ।
एतन्मे स्नेहतः सर्वे वचनं कर्तुमर्हथ ॥ २७
शुकस्य वचनं श्रुत्वा दिशः सवनकाननाः ।
समुद्राः सरितः शैलाः प्रत्यूचुस्तं समन्ततः ॥ २८
यथाज्ञापयसे विप्र बाढमेवं भविष्यति ।
ऋषेर्व्याहरतो वाक्यं प्रतिवक्ष्यामहे वयम् ॥ २९ C. 12. 1260 B. 12. 333 K. 12. 340.

इति श्रीमहाभारते शान्तिपर्वणि एकोनविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३१९ ॥

---

799* कृताञ्जलिपुटाः सर्वे तुष्टुवुर्हृष्टमानसाः ।

— $^{c}$) $K_7$ -मानसा; $M_5$ -तपसा (for -मनसा). $G_2$ पितुरत्यंतमिष्टोयं. — $^{d}$) $K_6$ $D_{n1, n4}$ $D_{s1}$ $D_{2, 3, 5, 7, 8}$ $M_{1, 5-7}$ विसर्जितः ($D_7$ °ताः) (for विवर्जितः).

23 $^{b}$) $D_8$ -विस्मितः (for -धर्मवित्). — $^{c}$) $Ś_1$ अवैक्षत; $K_{1, 2}$ अवेक्षत; $D_{a4}$ उदैक्षतः; $D_{n4}$ उदैक्षित (for उदैक्षत). — $^{d}$) $D_{5, 7}$ भवने (for वचने). $G_2$ वचनं गमनस्य च.

24 $^{a}$) $K_{6, 7}$ $B_{0, 6-9}$ $D_{a4}$ $D_{s1}$ सोंतरीक्षं ($D_{a4}$ °क्ष-); $D_{n4}$ $D_4$ °रिक्ष-; $D_{5, 7}$ अंतरिक्षं (for सोऽन्त°). — $^{b}$) $D_4$ corrupt. $K_1$ $B_9$ $D_{s1}$ $D_8$ -काननं (for °नाम्). — $^{c}$) $K_6$ $B_{0, 6-9}$ $D_{a3, a4}$ $D_{n1, n4}$ $D_8$ $D_{2, 3, 8}$ विलोकयामास (for आलो°). — $^{d}$) $B_6$ $T_1$ $G_{1, 6}$ तदा (for तथा).

25 $^{b}$) $K_{6, 7}$ $B_{0, 6-9}$ $D_{a3, a4}$ $D_{n1, n4}$ $D_8$ $D_{2-5, 7-9}$ T $G_{1, 3, 6}$ $M_{1, 5-7}$ बहुमानसमंततः; $G_2$ बहुमान्य समंततः. — $^{c}$) $Ś_1$ $K_{1, 2, 4}$ $D_{4, 5, 7, 9}$ बद्धांजलि- (for कृताञ्जलि-). $K_7$ भूत्वा (for सर्वा). — $^{d}$) $K_2$ निरेक्षंते; $K_7$ $D_4$ निरीक्ष्यंते; $M_7$ °क्ष्यंति.

26 $^{a}$) $D_{s1}$ तां; $D_{4, 9}$ $M_5$ तांस् (for तास्). $B_9$ $D_{a4}$ $T_2$ तथा (for तदा). — Before 26$^{cd}$, $B_{7-9}$ $G_2$ ins. शुक उवाच. — $^{c}$) $D_{s1}$ $D_{4, 9}$ $G_{1, 6}$ मा (for मां).

27 $^{a}$) T $G_{1-3, 6}$ $M_{1, 5-7}$ तस्य (for ततः). $D_4$ reads प्रति twice. $D_{a4}$ देहं; $D_4$ देवं; $D_{5, 7}$ देशं (for देयं). — $^{c}$) $K_1$ स्नेह्यतः (for स्नेहतः). $K_6$ सर्वैर्; $D_{a3, a4}$ सर्वं; $G_1$ सद्ये (for सर्वे). — $^{d}$) $D_{a4}$ अर्हथः.

28 Before 28, $B_{8, 9}$ ins. भीष्म उवाच. — $^{b}$) $K_6$ $B_{0, 6-9}$ $D_{a3, a4}$ $D_{n1, n4}$ $D_8$ $D_{2, 3, 8}$ सर्वाः सकाननाः; $M_{1, 5-7}$ सजलका°. — $^{c}$) $D_{s2}$ सरिताः. — $^{d}$) $K_7$ $D_{5, 7}$ ते (for तं).

29 $^{b}$) $G_1$ भविष्यसि (for °ति). — $^{c}$) $K_1$ ऋषी; $D_{a4}$ ऋषिर् (for ऋषेर्). $G_1$ व्याहरते. — $^{d}$) $K_2$ corrupt. $K_7$ $D_{4, 9}$ प्रतिदास्यामहे वयं; T $G_{1-3, 6}$ °वक्ष्याम ($T_1$ $G_6$ °मि) ते वयं. ❀ Ca: प्रतिवक्ष्यामहे: शुकोऽनेन पथा गत इति । ❀

Colophon om. in $D_2$; $V_1$ $D_6$ missing: $K_{3, 5}$ $B_{1-5}$ $D_{a1, a2}$ $D_{n2, n3}$ $D_1$ $G_{4, 5}$ $M_{2-4}$ absent. — *Sub-parvan:* $Ś_1$ $K_{1, 2, 4, 6, 7}$ $B_{0, 6-9}$ $D_{a3, a4}$ $D_{n1, n4}$ $D_8$ $D_{3-5, 7-9}$ T $G_{1-3, 6}$ $M_{1, 5-7}$ मोक्षधर्म. — *Adhy. name:* $Ś_1$ $K_{1, 2, 4, 6, 7}$ $B_{0, 6-9}$ $D_{a3, a4}$ $D_{n1}$ $D_8$ $D_{3-5, 8, 9}$ $G_6$ $M_{5, 6}$ शुकाभि($K_7$ $D_{4, 5, 9}$ °ति)पतनं; $D_{n4}$ शुकोत्पतनं. — *Adhy. no.* (figures, words or both): $K_6$ 58; $B_7$ $D_{n4}$ $D_{s2}$ $T_1$ 156; $B_8$ 260; $D_{n1}$ 158; $D_8$ 153; $T_2$ 169; $G_1$ 155; $G_2$ 173; $G_3$ 157; $M_{1, 6, 7}$ 152; $M_5$ 188. — *Śloka no.:* $D_{a4}$ $D_{n1, n4}$ $D_8$ 31.

# ३२०

C.12.12608
B.12.334[3].1
K.12.341.1

भीष्म उवाच ।

इत्येवमुक्त्वा वचनं ब्रह्मर्षिः सुमहातपाः ।
प्रातिष्ठत शुकः सिद्धिं हित्वा लोकांश्चतुर्विधान् ॥ १

तमो ह्यष्टविधं हित्वा जहौ पञ्चविधं रजः ।
ततः सत्त्वं जहौ धीमांस्तदद्भुतमिवाभवत् ॥ २
ततस्तस्मिन्पदे नित्ये निर्गुणे लिङ्गवर्जिते ।

## 320

☞ This adhy. is missing in V1 D6 (cf. v. l. 12. 318. 1; 283. 15).

1 $^{a}$) D2 om. from इत्येव up to प्राति (in $1^{c}$). Da4 Ds1 उक्त्वा. T G1.2.6 इत्येवमुक्ते वचने. — $^{b}$) Ś1 K1.6 Dn4 D5.7 महर्षिः (for ब्रह्मर्षिः). K7 D4.5.7.9 T G1-3.6 M1.5-7 स (for सु-). K1 सुमहातपः. — T G1-3.6 repeat $1^{cd}$ after 26: for the sequence of stanzas $1^{c}$-$27^{b}$ in T G1-3.6, see the Tabular Statement below. — $^{c}$) Ś1 K1.2 प्रतिष्ठितः; K4.7 प्रतिष्ठत;

Tabular Statement

giving sequence of st. 1—$27^{ab}$ in T G1-3.6

[ $r$ = repeated ]

| T G6 | G1 | G2.3 | T G6 | G1 | G2.3 |
|---|---|---|---|---|---|
| $1^{ab}$ | $1^{ab}$ | $1^{ab}$ | 16-17 | 16-17 | 16-17 |
| $1^{cd}$ | $1^{cd}$ | $1^{cd}$ | 19 | 19 | 19 |
| 8-9 | 8-9 | 8-9 | $22^{ab}$ | $22^{ab}$ | ... |
| $10^{abcd}$ | $10^{abcd}$ | $10^{abcd}$ | 18 | 18 | 18 |
| $21^{cd}$ | $21^{cd}$ | $21^{cd}$ | 20 | 20 | 20 |
| $10^{ef}$ | $10^{ef}$ | $10^{ef}$ | $21^{ab}$ | $21^{ab}$ | $21^{ab}$ |
| 4-6 | 4-6 | 4-6 | $21^{cd}(r)$ | $21^{cd}(r)$ | $21^{cd}(r)$ |
| $11^{ab}$ | $11^{ab}$ | $11^{ab}$ | $22^{ab}(r)$ | $22^{ab}(r)$ | $22^{ab}$ |
| $11^{cd}$ | $11^{cd}$ | $11^{cd}$ | $22^{cd}$-26 | $22^{cd}$-26 | $22^{cd}$-26 |
| | $11^{cd}(r)$ | | | | |
| 12-13 | 12-13 | 12-13 | $1^{cd}(r)$ | $1^{cd}(r)$ | $1^{cd}(r)$ |
| 7 | 7 | 7 | 2-3 | 2-3 | 2-3 |
| 15 | 15 | 15 | $27^{ab}$ | $27^{ab}$ | $27^{ab}$ |
| 14 | 14 | 14 | | | |

K6 प्रातिष्ठतः (for °ष्ठत). Da3.a4 तपः- (for शुकः). Ds2 सिध्यं; G2 (both times) सिद्धो (for सिद्धिं). — $^{d}$) K6.7 Bo.6-9 Da3.a4 Dn1.n4 Ds D2-5.7-9 T G1-3.6 (last six second time) M1.5-7 Cn (gloss: सात्त्विकान्मोक्षप्रतिबन्धकान् किल्बिषसंसर्गानैश्वर्याख्यान्) Cp (gloss: अधर्माज्ञानवैराग्यानैश्वर्यरूपान्) Cs (gloss: क्षयान्ताः [12. 317. 20] इति चतुरो) दोषांश्च; Cnp (gloss: वितर्कविचारानन्दास्मिताख्यान् संप्रज्ञातभेदान्, तत्फलानीत्यर्थः) Csp (gloss: मनो जित्वाहंकारे धारयेत्तमपि जित्वा बुद्धौ धारयेत्तामपि जित्वा महत्तत्त्वे धारयेत्तदपि जित्वा परमात्मनि धारयेदित्येवं चतुर्विधान्) योगांश्च (for लोकांश्च). T G1-3.6 (all first time) गत्वा देशां( T2 °वां )श्च पर्वतान् । ❀ Ca: लोकांश्चतुर्विधान्, जरायुजाण्डजस्वेदजोद्भिज्जान् । ❀

2 For the sequence in T G1-3.6, see Tabular Statement on this page. T G1-3.6 read 2-3 after the repetition of $1^{cd}$ following 26. — $^{a}$) K2 T1 ततो (for तमो). K7 D4.5.7.9 T1 G1-3.6 [ऽ]पि (for हि). Da3.a4 अष्टविधिं; D5.7 °गुणं; Cnp नवगुणं (for अष्टविधं). Ś1 K1.2.4 त्यक्त्वा; Da4 जित्वा (for हित्वा). ❀ Ca: अष्टविधम्, प्रकृतिर्महानहंकारः पञ्चभूतानीत्यष्टौ । तेषु अहंकारस्तमोविकारः ॥ Cn: अष्टविधं, पुर्यष्टकप्रकारं तमः ॥ Cp: अष्टसु, अव्यक्तमहदहंकारपञ्चतन्मात्रेष्वनात्मस्वात्मबुद्धिरूपमष्टैश्वर्यरूपं वा ॥ Cs: अणिमाद्यष्टसिद्धीनां विपर्ययाः । ❀ — $^{b}$) ❀ Ca: पञ्चविधं रजः, शब्दादिविषयपञ्चकरागो रजसः पाञ्चविध्यम् ॥ Cn: पञ्चविधं, विषयपञ्चके प्रवर्तकं वासनामयं रजः । नवगुणं रज इति पाठे—अत्यागित्वमकार्पण्यं सुखदुःखोपसेवनम् । भेदः परुषता चैव कामः क्रोधस्तथैव च । दर्पो द्वेषोऽतिवादश्च एते प्रोक्ता रजोगुणाः ॥ Cs: पञ्चगुणम्, दुःखचेष्टाकामक्रोधदर्पगुणम् । ❀ — $^{c}$) G2 सितं; Ca (gloss: प्रकाश्याप्रकाशतया स्फुरणम्) सत्त्वं (as in text). ❀ Cn: सत्त्वम्, बुद्धिसत्त्वेन सर्वं संत्यज्य सत्त्वमपि त्यक्तम् येन त्यजसि तत्त्यजेति नारदोपदिष्टत्वात् । ❀ — $^{d}$) Da4 Dn4 अद्भूतम्. ❀ Cs: तद्धि दुःखात्त्यज्यते, सनकादिभिरपि योगेश्वरैः । शुकस्तदपि जहौ । तदद्भुतमिवाभवदित्यर्थः । ❀

3 For the sequence in T G1-3.6, see Tabular Statement on this page. — $^{a}$) T1 G6 गते (for पदे). K6 नित्यं; K7 D4.9 तिष्ठन्; T G1-3.6 शीते (for नित्ये). — $^{b}$) K7 D4.5.7.9 संग-; Cs (gloss: सूक्ष्मदेह-) लिङ्ग- (as in text), Ś1 (before corr.) K2.4

ब्रह्मणि प्रत्यतिष्ठत्स विधूमोऽग्निरिव ज्वलन् ॥ ३
उल्कापाता दिशां दाहा भूमिकम्पास्तथैव च ।
प्रादुर्भूताः क्षणे तस्मिंस्तदद्भुतमिवाभवत् ॥ ४
द्रुमाः शाखाश्च मुमुचुः शिखराणि च पर्वताः ।
निर्घातशब्दैश्च गिरिर्हिमवान्दीर्यतीव ह ॥ ५
न बभासे सहस्रांशुर्न जज्वाल च पावकः ।
ह्रदाश्च सरितश्चैव चुक्षुभुः सागरास्तथा ॥ ६
ववर्ष वासवस्तोयं रसवच्च सुगन्धि च ।
ववौ समीरणश्चापि दिव्यगन्धवहः शुचिः ॥ ७
स शृङ्गेऽप्रतिमे दिव्ये हिमवन्मेरुसंभवे ।
संश्लिष्टे श्वेतपीते द्वे रुक्मरूप्यमये शुभे ॥ ८
शतयोजनविस्तारे तिर्यगूर्ध्वं च भारत ।
उदीचीं दिशमाश्रित्य रुचिरे संददर्श ह ॥ ९
सोऽविशङ्केन मनसा तथैवाभ्यपतच्छुकः ।
ततः पर्वतशृङ्गे द्वे सहसैव द्विधाकृते ।
अदृश्येतां महाराज तदद्भुतमिवाभवत् ॥ १० C. 12. 12618 B. 12. 334[3].11 K. 12. 341. 11

---

-पूजिते ( for -वर्जिते ). —$^{c}$) Da4 ब्रह्मणी; M1. 5. 7 ब्रह्मर्षि- ( M1 °र्षिः ) ( for °णि ). K1 G2 प्रतितिष्ठत्; B8 G1 M1. 6. 7 प्रत्यतिष्ठन्. —$^{d}$) K7 इवोज्ज्वलन्.

4 For the sequence in T G1–3. 6, see the Tabular Statement on p. 1806. T G1–3. 6 read 4–6 after 10$^{ef}$. —$^{a}$) K7 उल्कापातां; B6–8 D8 °पातो ( for उल्कापाता ). D5. 7. 9 T G1–3. 6 M1. 5–7 दिशो ( for दिशां ). B0. 6–9 Da3 Dn1. n4 D8 D2. 3. 8 T2 दाहो ( for दाहा ). —$^{b}$) K6. 7 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 T G1–3. 6 भूमिकंपस्; D5. 7 °कंपं ( for °कम्पास् ). T2 ( also as in text ) च भारत ( for तथैव च ). —$^{c}$) Ś1 K1. 4 Dn1. n4 D8 D2. 3. 8 T2 G1. 3 प्रादुर्भूतः; K2. 6 Da4 °भूता ( sic ) ( for °भूताः ). —$^{d}$) Da4 Dn4 तदद्भूतम्.

5 For the sequence in T G1–3. 6, see the Tabular Statement on p. 1806. —$^{a}$) K2 द्रुमैः; B7 द्रुमः. —$^{b}$) Ds2 D5 च पर्वतः; D2 व्यशीर्यत. —$^{c}$) D7 निर्वात-; M7 निघात- ( for निर्घात- ). K7 D4. 9 हिमवान्; D5. 7 हि महान्; T G1. 6 गुरुभिर्; G2 बहुभिर्; G3 शिखरैर्; M1. 5–7 हि गिरिर् ( for च गि° ). —$^{d}$) Ś1 K1. 2. 4 दीर्यते स्म; Ds1 °तेव ( for °तीव ). K6 B0. 6–8 D8 D2. 3. 8 G3 हि; T2 हा; M1. 5–7 च ( for ह ). K7 D4. 5. 7. 9 वि( D5. 7 उ )दीर्यत इवाच( D7 °न )लः; B9 Da3. a4 हिमवान्दीर्यतां बहिः.

6 For the sequence in T G1–3. 6, see the Tabular Statement on p. 1806. —$^{a}$) B8 D5. 7 नाबभासे; Da4 न बभाषे; M1. 5 ( *inf. lin.* ). 6. 7 न बभास ( for °से ). G3 सशैला भूर् ( for सहस्रांशुर् ).

7 For the sequence in T G1–3. 6, see the Tabular Statement on p. 1806. T G1–3. 6 read 7 after 13. —$^{a}$) K1 वासवास्. —$^{b}$) Ś1 रसगंधि; K2 न सगंधं ( for रसवच्च ). K4 सुगंधिना ( for °धि च ). — K1 om. 7$^{c}$–8$^{b}$. —$^{d}$) Da3. a4 दिव्यं ( for दिव्य- ). K2 शुचि.

8 For the sequence in T G1–3. 6, see the Tabular Statement on p. 1806. K1 om. 8$^{ab}$ ( cf. v. l. 7 ). —$^{a}$) K2 सदंगे ( sic ); G2 सदृशे; G3 समृगे ( for स शृङ्गे ). K4. 6. 7 B0. 6. 7. 8 ( orig. ). 9 Da3. a4 Dn1. n4 D8 D2. 3. 8 प्रथमे; B8 ( marg. ) परमे ( for ऽप्रतिमे ). D4. 5. 7 सशृंगप्रतिमे दिव्ये. ❀ C8 : स शुकः शृङ्गे संददर्शेत्युपरि संबन्धः । ❀ —$^{b}$) D5. 7 हिमवान् ( for °वन्- ). K2 -मेद-; T G1–3. 6 -गिरि- ( for -मेरु- ). Ś1 K2. 4. 7 D4. 9 -संनिभे ( for -संभवे ). — K7 om. 8$^{cd}$. —$^{c}$) T1 G6 येन ( for श्वेत- ). D4. 5. 7. 9 च; G2 lacuna ( for द्वे ). —$^{d}$) K1. 2 D9 रुक्मरुप्य- ( sic ); D5. 7 रुंकारूप्य-; T G2. 3. 6 रूप्यरुक्म-; G1 रूप्यमम ( sic ); M1. 5–7 रुग्मरूप्य- ( for रुक्म° ). G2. 3 गुणे ( for शुभे ).

9 For the sequence in T G1–3. 6, see the Tabular Statement on p. 1806. —$^{a}$) M1. 5–7 दश- ( for शत- ). K7 D4. 9 -विस्तीर्णे ( for -विस्तारे ). —$^{b}$) Da4 भारतः. —$^{c}$) K1. 7 D4 उदीची-; Da4 °चिं; D5 °चि-; D7 °चं ( for °चीं ). K7 दिशिम् ( sic ). K6 Da3 Dn1. n4 D8 D2. 3. 8 आस्थाय ( for आश्रित्य ). —$^{d}$) D5. 7 स ( for सं- ). K2 स; K7 D4. 9 च ( for ह ).

10 For the sequence in T G1–3. 6, see the Tabular Statement on p. 1806. —$^{a}$) B9 [ऽ]रिशृंगेन ( sic ); Da4 Ds2 [ऽ]विशोकेन ( for °शङ्केन ). Da4 तमसा ( for मनसा ). —$^{b}$) K1 न्यपतत्; K6 [अ]द्य° ( for [अ]भ्य° ). D5 यतः; D7 च सः ( for शुकः ). —$^{c}$) Ś1 K1. 2 पूर्वे स ( for पर्वत- ). Da4 T G1. 3. 6 M1. 5–7 ते ( for द्वे ). B9 ततः स पर्वते शृंगे; G2 तस्मिन्पर्वते शृंगे ते. —$^{d}$) K1 शहशैव ( sic ); B0 सर्वशैव ( for सहसैव ). — After 10$^{cd}$, T G1–3. 6 read 21$^{cd}$ for the

C. 12. 12618
B. 12. 334[3]. 11
K. 12. 341. 12
ततः पर्वतशृङ्गाभ्यां सहसैव विनिःसृतः ।
न च प्रतिजघानास्य स गतिं पर्वतोत्तमः ॥ ११
ततो महानभूच्छब्दो दिवि सर्वदिवौकसाम् ।
गन्धर्वाणामृषीणां च ये च शैलनिवासिनः ॥ १२
दृष्ट्वा शुकमतिक्रान्तं पर्वतं च द्विधाकृतम् ।
साधु साध्विति तत्रासीन्नादः सर्वत्र भारत ॥ १३
स पूज्यमानो देवैश्च गन्धर्वैरृषिभिस्तथा ।
यक्षराक्षससंघैश्च विद्याधरगणैस्तथा ॥ १४
दिव्यैः पुष्पैः समाकीर्णमन्तरिक्षं समन्ततः ।
आसीत्किल महाराज शुकाभिपतने तदा ॥ १५
ततो मन्दाकिनीं रम्यामुपरिष्टादभिव्रजन् ।
शुको ददर्श धर्मात्मा पुष्पितद्रुमकाननाम् ॥ १६
तस्यां क्रीडन्त्यभिरताः स्नान्ति चैवाप्सरोगणाः ।
शून्याकारं निराकाराः शुकं दृष्ट्वा विवाससः ॥ १७
तं प्रक्रमन्तमाज्ञाय पिता स्नेहसमन्वितः ।
उत्तमां गतिमास्थाय पृष्ठतोऽनुससार ह ॥ १८
शुकस्तु मारुतादूर्ध्वं गतिं कृत्वान्तरिक्षगाम् ।
दर्शयित्वा प्रभावं स्वं सर्वभूतोऽभवत्तदा ॥ १९

---

first time, repeating it in its proper place. —[e]) T1 G1.3.6 अदृश्येते; G2 °श्यत (for °श्येतां). —[f]) Da4 अद्भूतम्.

11 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. —[a]) Ś1 K1.2 पूर्वं स (for पर्वत-). Da4 -संगाभ्यां; D5.7 -शृंगस्य (for -शृङ्गाभ्यां). —[b]) K1.2.4 विनिस्सृतः (for विनिःसृतः). — G1 reads 11[cd] twice. — [cd]) K1 (*sup. lin.* as in text) प्रतिजगान. Dn4 गतिं च; G1 (second time).2.3 संगतिं (for स गतिं). G1 (first time) स्वनः प्रत्याजनोघस्य संगतं पर्वतोत्तमे (corrupt).

12 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. K1 om. 12. —[d]) K2 शैले; Da4 शैल्य- (for शैल-). D5.7 ये न (D5 च) कैलासवासिनः.

13 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. —[a]) Da4 शुको; D8 (before corr.) शैलम् (for शुकम्). K1 अतिक्रांतं; K7 D4 °क्रांत-; Da4 अतीक्रांतं. —[b]) K7 द्विताकृतं. —[c]) K6 अभून् (for आसीन्). G2 साधु साधु तवासीन्नो. —[d]) K2 G2 नार(G2 रस)दः सर्वभारत (sic). —After 13, T G1–3.6 read 7.

14 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. T G1.3–6 transp. 14 and 15. —[a]) K7 D8 G2.3 सं- (for स). —[b]) K6 सदा (for तथा). —Ś1 K1.2.4 om. (hapl.) 14[cd].

15 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. T G1–3.6 transp. 14 and 15. —[b]) K6.7 B0.6–9 अंतरीक्षं; Dn4 °रिक्ष-; G2 °रिक्षे (for °रिक्षं). —[d]) K7 D4.5.7.9 शुकाति- (for शुकाभि-). K7 Ds1 T1 G6 तथा (for तदा).

16 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. —[a]) K1.4 D5 M1.6 मंदाकिनी (for °किनीं). Ś1 K1.2.4 दिव्याम् (for रम्याम्). —[b]) T2 उपदिष्टाद् (for °रिष्टाद्). K6 अपि; B0 T G1.6 अति- (for अभि-). G2 उपविष्टां रतिप्रदां. —[d]) K1 Da4 T2 G3 -काननं. K7 D4.9 दिव्यपुष्पितकाननां.

17 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. —[a]) K7 क्रीडति. Da4 अभिरतः. Ś1 K1.2.4 तस्यां क्रीडासु निरताः; G2 कस्यां किं संत्यभिरताश्च (sic). —[b]) K4 स्नाति; K6.7 D4.9 G3 ततश्च; B6.7 Da3.a4 तीरे; B8 नित्यं; G2 चानि (sic) (for स्नान्ति). B0 Dn1.n4 D8 D2.3.8 ते चै(B0 Dn1 D8 D8 ताश्चै)वाप्सरसां गणाः. —[c]) Da4 D5.7 G1.2.6 शून्याकारां (Da4 °र-); C8 (gloss: मानसविकाररहितम्) °कारं (as in text). T G1.2.6 निराकारं (G2 °रां) (for °काराः). K7 D4.9 शून्यागारसमाकारं. —[d]) K7 दृष्टा (for दृष्ट्वा). G1 [अ]पि वाससः; G3 विवासस्वं. —After 17, T G1–3.6 read 19, T G1.6 reading 22[ab] thereafter, followed by 18.

18 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. —[a]) K6.7 B0.6–9 Da3.a4 Dn1.n4 D8 D2–5.7–9 G3 प्रक्रा(D7 °का)मंतम् (for प्रक्र°). T1 G2.6 तं प्रयांतमथाज्ञाय; T2 G1 तं प्रक्रांतमभि(G1 °था)ज्ञाय. —[b]) G2 -समन्वितं.

19 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. B0 om. 19[a]–22[b]. —[a]) D8 (before corr.) G2 उर्ध्वां. T1 G1.3 शुकस्तु मरुताम्

महायोगगतिं त्वग्र्यां व्यासोत्थाय महातपाः ।
निमेषान्तरमात्रेण शुकाभिपतनं ययौ ॥ २०
स ददर्श द्विधा कृत्वा पर्वताग्रं शुकं गतम् ।
शशंसुरृषयस्तस्मै कर्म पुत्रस्य तत्तदा ॥ २१
ततः शुकेति दीर्घेण शैक्षेणाक्रन्दितस्तदा ।
स्वयं पित्रा स्वरेणोच्चैस्त्रीँल्लोकाननुनाद्य वै ॥ २२
शुकः सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः ।
प्रत्यभाषत धर्मात्मा भोःशब्देनानुनादयन् ॥ २३
तत एकाक्षरं नादं भो इत्येव समीरयन् ।
प्रत्याहरज्जगत्सर्वमुच्चैः स्थावरजङ्गमम् ॥ २४
ततः प्रभृति चाद्यापि शब्दाननुच्चारितान्पृथक् ।
गिरिगह्वरपृष्ठेषु व्याजहार शुकं प्रति ॥ २५ C. 12. 12633 B. 12. 334(3).26 K. 12. 341. 26

---

( G1 °दू )ध्र्वां. —b ) G2.3 गत्वा ( for कृत्वा ). B7–9 [अं]तरीक्षगां; D7 °रिक्षिणां. B6 गतिं तामंतरीक्षगां; T1 G1.6 गतिं गत्वांतरिक्षगः. —c ) D5.7 प्रभावत्वं ( for °वं स्वं ). —d ) B6.8.9 Da3 Dn1.n4 D8 D2.3.8 ब्रह्म- ( for सर्व- ). K6.7 D4.9 सर्वभूतगतोभवत्; G3 °भूताभयं तदा. — After 19, T G1.6 read 22ab for the first time, repeating it in its proper place.

20 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. B9 om. 20 ( cf. v. l. 19 ). —a ) Ś1 K1.2.4 अथ ( for महा- ). G3 -योगगतिज्ञ. Ś1 K1.2.4 व्यासः; Dn1.n4 D8 D2.3.8 Cv त्वन्यां; D5.7 स्वग्र्यां; T G1.6 चाग्र्यां; G2.3 चाह ( for त्वग्र्यां ). —b ) Ś1 K2.4 समास्थाय; K1 समास्थाय; B8.9 Cv ( gloss : व्यासः आस्थायेत्यर्थः ) व्यासोस्थाय; D4.5.7 व्यासः स्थित्वा; G2 व्यासोक्त्यायं; Cn ( gloss : संधिरार्षः ) व्यासोत्थाय ( as in text ). K7 D9 M1.5–7 व्यासोप्यास्थाय तत्र तु ( K7 D9 शीघ्रगः ). —c ) Dn1 निमिषांतरमात्रेण. —d ) K2.4.7 D4.5.7.9 शुकाति- ( for °भि- ). G2.3 यथा ( for ययौ ).

21 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. B9 om. 21 ( cf. v. l. 19 ). —b ) G2 शुकाहतं ( for शुकं गतम् ). — T G1–3.6 read 21cd for the first time after 10cd. —c ) B8 शशंशुर्; B9 सशंशुर्; T1 G1.6 ( all second time ) शशंसु. K6.7 B6–9 Da3.a4 Dn1.n4 D8 D2–5.7.9 तस्य; D8 तत्र ( for तस्मै ). T G1.3.6 ( all first time ) शुकं गतं शशंसुः स ( T2 शशंसतः; G1 शशंसुतुः ); G2 ( first time ) शुकं गताशं*सूक्ष्मं ( sic ). —d ) M1.5–7 तथा ( for तदा ). T G1–3.6 ( all first time ) ऋषिपुत्रस्य यत्तदा.

22 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. B9 om. 22ab ( cf. v. l. 19 ). T G1.6 read 22ab for the first time after 19. —a ) Da3 शुकाति-; M1.5.6 शुकोति ( for शुकेति ). Ś1 K1.2.4 Cs ( gloss : शिक्षाध्यायस्वरेण ) शैक्षेण; Da4 दैर्घ्येण; D6 दीर्घेन ( for °ण ). ❀ Cn : शुका३ इति दूराद्धूते प्लुतिः । अप्लुतवदुपस्थिते ( Pāṇ. 6. 1. 29 ) इति अप्लुतवद्भावाच्च प्रकृतिभावः । ❀ —b ) Ś1 K1.2.4 दीर्घेण ( K2.4 °न ); K7 श्लेक्षेण; Da3 D5.7 शैक्ष्येण; Dn1.n4 D2.3.8 शब्देन; Ds1 शैक्षेन; Cv ( gloss : वेदशिक्षासंबन्धिना ) °ण ( as in text ). Ś1 K1.2.4 B6 G3 [आ]क्रंदितं; Ca ( gloss : सक्लेशमाहूतः ) आक्रन्दितस् ( as in text ). B7 तथा ( for तदा ). —c ) K6 स्वरं; Da4 स वै ( for स्वयं ). —d ) K1 D4 अनुवाद्य ( for °नाद्य ). K7 D9 त्रैलोक्यांतरनादिना ( D9 °नीं ).

23 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. —b ) Da3 om. ( hapl. ) सर्वात्मा. K7 सर्वतोमुखैः; Dn1 °मुखं. —d ) K6 Da4 D4 T2 G1.2 भो- ( for भोः- ). D5.7 अनुनादयत्. T1 G6 शब्देनानुविनादयत्. ❀ Ca : स नभःशब्देनानुनादयन् प्रत्याह । ❀

24 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. —a ) D7 एवाक्षरं; T1 G1 एकाक्षरां ( for °क्षरं ). D4 lacuna; T G1.6 वाचं ( for नादं ). G2 तयेवकक्षरावोचं ( sic ). —b ) B6.7 Dn1.n4 D8 D2.3.8 G3 भोर् ( for भो ). K6 B6.7 Da3.a4 समैरयत् ( K6 °यन् ); D8 G1 समीरयत्. Ś1 K1.2.4 भोरित्येवमुदीरयन्; D7 भोःशब्देन समीरयन्. —c ) B8 Da4 T G2.3.6 M1.5–7 प्र( M6 प्रा )- व्याहरज् ( for प्रत्या° ). —d ) Da4 -जंगमः.

25 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. —a ) Da4 वा ( for च ). K2 ततः प्रभृत्यथाद्यापि. —c ) K2 गिरिर् ( for गिरि- ). B9 T G2.3.6 -पृष्ठे तु ( for -पृष्ठेषु ). M1.6.7 गिरीशद्वारपृष्ठे तु. —d ) K7 Dn1.n4 Ds2 D2–5.7–9 व्याहरंति ( for व्याजहार ).

26 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. —a ) K4.6.7 Da3.a4

C. 12. 12633
B. 12. 334[3]. 26
K. 12. 341. 27

अन्तर्हितः प्रभावं तु दर्शयित्वा शुकस्तदा ।
गुणान्संत्यज्य शब्दादीन्पदमध्यगमत्परम् ॥ २६
महिमानं तु तं दृष्ट्वा पुत्रस्यामिततेजसः ।
निषसाद गिरिप्रस्थे पुत्रमेवानुचिन्तयन् ॥ २७
ततो मन्दाकिनीतीरे क्रीडन्तोऽप्सरसां गणाः ।
आसाद्य तमृषिं सर्वाः संभ्रान्ता गतचेतसः ॥ २८
जले निलिल्यिरे काश्चित्काश्चिद्गुल्मान्प्रपेदिरे ।
वसनान्याददुः काश्चिद्दृष्ट्वा तं मुनिसत्तमम् ॥ २९
तां मुक्ततां तु विज्ञाय मुनिः पुत्रस्य वै तदा ।
सक्ततामात्मनश्चैव प्रीतोऽभूद्व्रीडितश्च ह ॥ ३०
तं देवगन्धर्ववृतो महर्षिगणपूजितः ।
पिनाकहस्तो भगवानभ्यागच्छत शंकरः ॥ ३१
तमुवाच महादेवः सान्त्वपूर्वमिदं वचः ।
पुत्रशोकाभिसंतप्तं कृष्णद्वैपायनं तदा ॥ ३२
अग्नेर्भूमेरपां वायोरन्तरिक्षस्य चैव ह ।
वीर्येण सदृशः पुत्रस्त्वया मत्तः पुरा वृतः ॥ ३३
स तथालक्षणो जातस्तपसा तव संभृतः ।
मम चैव प्रभावेन ब्रह्मतेजोमयः शुचिः ॥ ३४

---

D8 D7 T G1.3 अंतर्हित- (for °र्हितः). B8 तं (for तु). — $^{b}$) D5.7 G3 तथा (for तदा). — $^{c}$) Ś1 K1.2.4 सत्त्वादीन्; D5.7 धर्मादीन् (for शब्दा°). — $^{d}$) K6 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 T G1–3.6 M5.6 अभ्य( G1 °भ्या )गमत्; M1.7 अभ्यगमं (for अध्यगमत्). D5.7 परमभ्यगमत्पदं. — After 26, T G1–3.6 repeat $1^{cd}$, followed by 2–3.

27 For the sequence in T G1–3.6, see the Tabular Statement on p. 1806. Ś1 om. 27–37. K1 om. $27^{a}$–$28^{b}$. — $^{a}$) D5 दृष्ट्वा स; G2 तं श्रुत्वा (for तं दृष्ट्वा). — $^{b}$) K7 -चेतसा; Da4 -तेजसा. — K2 om. $27^{c}$–$28^{b}$. K4 om. $27^{c}$–$37^{d}$. K7 om. (hapl.) $27^{c}$–$28^{d}$. — $^{c}$) Dn1 -प्रस्थै (for -प्रस्थे). D4.9 विषसाद गिरिः ( D4 °रेः ) पृष्ठे. — $^{d}$) K6 Dn1 D8 D3 अन्वचिंतयन्; Da4 अनुचिंतयेत्.

28 Ś1 K4.7 om. 28; K1.2 om. $28^{ab}$ (for all, cf. v. l. 27). $28^{ab}$ is partly damaged in B6. — $^{b}$) Da3.a4 D8 M5.6 क्रीडंत्यो; D7 क्रीडंते; M1 °ति (for क्रीडन्तो). — $^{c}$) K2 T2 तमृषीं. T G1–3.6 सर्वे (for सर्वाः). — $^{d}$) K1.2 संत्रस्ता; M1 सर्वाभ्रा (sic); M6 सर्वा भ्रांता (for संभ्रान्ता).

29 Ś1 K4 om. 29 (cf. v. l. 27). K1.2 om. 29–37. — $^{a}$) B0 काचित्. — $^{b}$) B8 (marg. as in text) D5.7 गुल्मं (for गुल्मान्). G2 काचित्कमलान्प्रतिपेदिरे. — $^{c}$) K6 वसनानाददुः काश्चिद्; T G1–3.6 वासांस्याददिरे का( G1 कां )श्चिद्; M1.5–7 वासांस्य( M1 °स्या )भ्याददुः का°. — $^{d}$) Dn1.n4 D8 D2.3.8 transp. दृष्ट्वा and तं.

30 Ś1 K1.2.4 om. 30 (cf v. l. 27, 29). — $^{a}$) D5.7 च (for तु). — $^{b}$) K6.7 G2.3 मुनि- (for मुनिः). G1 थे (for वै). — $^{c}$) B0 शक्तताम् (for स°). — $^{d}$) G2 हि (for ऽभूद्). T G1–3.6 M1.5–7 व्रीळितश्च. D5.7 तदा (for च ह).

31 Ś1 K1.2.4 om. 31 (cf. v. l. 27, 29). — $^{a}$) Da4 ते; G2 स (for तं). M1.6.7 दैव- (for देव-). D5.7 -नुतो (for -वृतो). — $^{b}$) B6 Ds2 -सेवितः (for -पूजितः). — $^{d}$) K6.7 Da4 D4.9 M1.6.7 अभ्यग( M1.7 °भ्युग-; M6 °भ्युद्र )च्छत; T G1–3.6 अभ्या( T2 G2 °भ्य )गच्छत्स; M5 °गच्छच्च (for °गच्छत).

32 Ś1 K1.2.4 om. 32 (cf. v. l. 27, 29). — $^{b}$) B0.6 शांत्व-; D5.7 साम- (for सान्त्व-). D2 अहं (for इदं). — $^{c}$) D7 -शोकादि-; D9 -शोकाति- (for -शोकाभि-).

33 Ś1 K1.2.4 om. 33 (cf. v. l. 27, 29). Before 33, B8 ins. महेश्वर उवाच. — $^{a}$) K6 आग्नि (for अग्नेर्). — $^{b}$) K6 B0.7–9 Da4 D8 अंतरीक्षस्य. K7 D4.5.7.9 T2 G1.2 हि (for ह). — $^{c}$) Da4 सदृशं (for °शः). — $^{d}$) B0.8 Da3 Dn1.n4 D8 D2.3.8 transp. त्वया and पुरा. Da4 त्वया पुत्र पुरा वृतः; D5.7 भूयान्मत्तः पुरा वृतः; T1 स्वयमुक्तः पुरा वृतः; G1 स्वयदत्त पुरा वृतः (sic).

34 Ś1 K1.2.4 om. 34 (cf. v. l. 27, 29). — $^{b}$) G1 तप- (for तव). B8 संवृतः; Da4 संभृताः; D5.7 संमतः; G2 संभृतं (for °तः). — $^{c}$) G2 तवैव च (for मम चैव). B0.8 (marg.) Dn1.n4 D8 D2.3.8 प्रसादेन (for प्रभावेन). — $^{d}$) G3 ब्रह्मतेजोगतः शुकः.

35 Ś1 K1.2.4 om. 35 (cf. v. l. 29). — $^{a}$) G2 संगमे परमं प्राप्तो. — $^{b}$) K7 Da4 Dn1 G2 दुष्प्रापम् (for °पाम्). Da4 अजितेंद्रियः; T G1–3.6 M1.5–7 अकृ-

C. 12. 12633
B. 12. 334[3]. 26
K. 12. 341. 27

अन्तर्हितः प्रभावं तु दर्शयित्वा शुकस्तदा ।
गुणान्संत्यज्य शब्दादीन्पदमध्यगमत्परम् ॥ २६
महिमानं तु तं दृष्ट्वा पुत्रस्यामिततेजसः ।
निषसाद गिरिप्रस्थे पुत्रमेवानुचिन्तयन् ॥ २७
ततो मन्दाकिनीतीरे क्रीडन्तोऽप्सरसां गणाः ।
आसाद्य तमृषिं सर्वाः संभ्रान्ता गतचेतसः ॥ २८
जले निलिल्यिरे काश्चित्काश्चिद्गुल्मान्प्रपेदिरे ।
वसनान्याददुः काश्चिद्दृष्ट्वा तं मुनिसत्तमम् ॥ २९
तां मुक्ततां तु विज्ञाय मुनिः पुत्रस्य वै तदा ।
सक्ततामात्मनश्चैव प्रीतोऽभूद्व्रीडितश्च ह ॥ ३०
तं देवगन्धर्ववृतो महर्षिगणपूजितः ।
पिनाकहस्तो भगवानभ्यागच्छत शंकरः ॥ ३१
तमुवाच महादेवः सान्त्वपूर्वमिदं वचः ।
पुत्रशोकाभिसंतप्तं कृष्णद्वैपायनं तदा ॥ ३२
अग्नेर्भूमेरपां वायोरन्तरिक्षस्य चैव ह ।
वीर्येण सदृशः पुत्रस्त्वया मत्तः पुरा वृतः ॥ ३३
स तथालक्षणो जातस्तपसा तव संभृतः ।
मम चैव प्रभावेन ब्रह्मतेजोमयः शुचिः ॥ ३४

---

D$_8$ D$_7$ T G$_{1.3}$ अंतर्हित- (for °र्हितः). B$_8$ तं (for तु). —[b]) D$_{5.7}$ G$_3$ तथा (for तदा). —[c]) Ś$_1$ K$_{1.2.4}$ सत्त्वादीन्; D$_{5.7}$ धर्मादीन् (for शब्दा°). —[d]) K$_6$ B$_{0.6-9}$ D$_{a3.a4}$ D$_{n1.n4}$ D$_8$ D$_{2.3.8}$ T G$_{1-3.6}$ M$_{5.6}$ अभ्य(G$_1$ °भ्या)गमत्; M$_{1.7}$ अभ्यगमं (for अध्यगमत्). D$_{5.7}$ परमभ्यगमत्पदं. — After 26, T G$_{1-3.6}$ repeat 1[cd], followed by 2–3.

27 For the sequence in T G$_{1-3.6}$, see the Tabular Statement on p. 1806. Ś$_1$ om. 27–37. K$_1$ om. 27[a]–28[b]. —[a]) D$_5$ दृष्ट्वा स; G$_2$ तं श्रुत्वा (for तं दृष्ट्वा). —[b]) K$_7$ -चेतसा; D$_{a4}$ -तेजसा. — K$_2$ om. 27[c]–28[b]. K$_4$ om. 27[c]–37[d]. K$_7$ om. (hapl.) 27[c]–28[d]. —[c]) D$_{n1}$ -प्रस्थै (for -प्रस्थे). D$_{4.9}$ विषसाद गिरिः (D$_4$ °रेः) पृष्ठे. —[d]) K$_6$ D$_{n1}$ D$_8$ D$_3$ अन्वचिंतयन्; D$_{a4}$ अनुचिंतयेत्.

28 Ś$_1$ K$_{4.7}$ om. 28; K$_{1.2}$ om. 28[ab] (for all, cf. v. l. 27). 28[ab] is partly damaged in B$_6$. —[b]) D$_{a3.a4}$ D$_8$ M$_{5.6}$ क्रीडंत्यो; D$_7$ क्रीडंते; M$_1$ °ति (for क्रीडन्तो). —[c]) K$_2$ T$_2$ तमृषीं. T G$_{1-3.6}$ सर्वे (for सर्वाः). —[d]) K$_{1.2}$ संत्रस्ता; M$_1$ सर्वात्रा (sic); M$_6$ सर्वा भ्रांता (for संभ्रान्ता).

29 Ś$_1$ K$_4$ om. 29 (cf. v. l. 27). K$_{1.2}$ om. 29–37. —[a]) B$_0$ काचित्. —[b]) B$_8$ (marg. as in text) D$_{5.7}$ गुल्मं (for गुल्मान्). G$_2$ काचित्कमलान्प्रतिपेदिरे. —[c]) K$_6$ वसनानाददुः काश्चिद्; T G$_{1-3.6}$ वासांस्याददिरे का(G$_1$ कां)श्चिद्; M$_{1.5-7}$ वासांस्य(M$_1$ °स्या)भ्याददुः का°. —[d]) D$_{n1.n4}$ D$_8$ D$_{2.3.8}$ transp. दृष्ट्वा and तं.

30 Ś$_1$ K$_{1.2.4}$ om. 30 (cf v. l. 27, 29). —[a]) D$_{5.7}$ च (for तु). —[b]) K$_{6.7}$ G$_{2.3}$ मुनि- (for मुनिः). G$_2$ थे (for वै). —[c]) B$_0$ शक्तताम् (for स°). —[d] G$_2$ हि (for ऽभूद्). T G$_{1-3.6}$ M$_{1.5-7}$ व्रीळितश्च D$_{5.7}$ तदा (for च ह).

31 Ś$_1$ K$_{1.2.4}$ om. 31 (cf. v. l. 27, 29). —[a]) D$_{a4}$ ते; G$_2$ स (for तं). M$_{1.6.7}$ दैव- (for देव-). D$_{5.7}$ -नुतो (for -वृतो). —[b]) B$_8$ D$_{s2}$ -सेवितः (for -पूजितः). —[d]) K$_{6.7}$ D$_{a4}$ D$_{4.9}$ M$_{1.6.7}$ अभ्यग(M$_{1.7}$ °भ्युग-; M$_6$ °भ्युद्ग)च्छत; T G$_{1-3.6}$ अभ्या(T$_2$ G$_2$ °भ्य)गच्छत्स; M$_5$ °गच्छत्त (for °गच्छत).

32 Ś$_1$ K$_{1.2.4}$ om. 32 (cf. v. l. 27, 29). —[b]) B$_{0.6}$ शांत्व-; D$_{5.7}$ साम- (for सान्त्व-). D$_2$ अहं (for इदं). —[c]) D$_7$ -शोकादि-; D$_9$ -शोकाति- (for -शोकाभि-).

33 Ś$_1$ K$_{1.2.4}$ om. 33 (cf. v. l. 27, 29). Before 33, B$_8$ ins. महेश्वर उवाच. —[a]) K$_6$ आग्नि (for अग्नेर्). —[b]) K$_6$ B$_{0.7-9}$ D$_{a4}$ D$_8$ अंतरीक्षस्य. K$_7$ D$_{4.5.7.9}$ T$_2$ G$_{1.2}$ हि (for ह). —[c]) D$_{a4}$ सदृशं (for °शः). —[d]) B$_{0.8}$ D$_{a3}$ D$_{n1.n4}$ D$_8$ D$_{2.3.8}$ transp. त्वया and पुरा. D$_{a4}$ त्वया पुत्र पुरा वृतः; D$_{5.7}$ भूयान्मत्तः पुरा वृतः; T$_1$ स्वयमुक्तः पुरा वृतः; G$_1$ त्वयदत्त पुरा वृतः (sic).

34 Ś$_1$ K$_{1.2.4}$ om. 34 (cf. v. l. 27, 29). —[b]) G$_1$ तप- (for तव). B$_8$ संवृतः; D$_{a4}$ संभृताः; D$_{5.7}$ संमतः; G$_2$ संभृतं (for °तः). —[c]) G$_2$ तवैव च (for मम चैव). B$_{0.8}$ (marg.) D$_{n1.n4}$ D$_8$ D$_{2.3.8}$ प्रसादेन (for प्रभावेन). —[d]) G$_3$ ब्रह्मतेजोगतः शुकः.

35 Ś$_1$ K$_{1.2.4}$ om. 35 (cf. v. l. 29). —[a]) G$_2$ संगमे परमं प्राप्तो. —[b]) K$_7$ D$_{a4}$ D$_{n1}$ G$_2$ दुष्प्रापम् (for °पाम्). D$_{a4}$ अजितेंद्रियः; T G$_{1-3.6}$ M$_{1.5-7}$ अकु-

स गतिं परमां प्राप्तो दुष्प्रापामजितेन्द्रियैः ।
दैवतैरपि विप्रर्षे तं त्वं किमनुशोचसि ॥ ३५
यावत्स्थास्यन्ति गिरयो यावत्स्थास्यन्ति सागराः ।
तावत्तवाक्षया कीर्तिः सपुत्रस्य भविष्यति ॥ ३६
छायां स्वपुत्रसदृशीं सर्वतोऽनपगां सदा ।
द्रक्ष्यसे त्वं च लोकेऽस्मिन्मत्प्रसादान्महामुने ॥ ३७
सोऽनुनीतो भगवता स्वयं रुद्रेण भारत ।
छायां पश्यन्समावृत्तः स मुनिः परया मुदा ॥ ३८
इति जन्म गतिश्चैव शुकस्य भरतर्षभ ।
विस्तरेण मयाख्यातं यन्मां त्वं परिपृच्छसि ॥ ३९
एतदाचष्ट मे राजन्देवर्षिर्नारदः पुरा ।
व्यासश्चैव महायोगी संजल्पेषु पदे पदे ॥ ४०
इतिहासमिमं पुण्यं मोक्षधर्मार्थसंहितम् ।
धारयेद्यः शमपरः स गच्छेत्परमां गतिम् ॥ ४१ C. 12. 12649 B. 12. 334[3]. 42 K. 12. 341. 42

इति श्रीमहाभारते शान्तिपर्वणि विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२० ॥

---

तात्मभिः. — c) K7 D4.9 विप्रर्षिस् (for °र्षे). — d) D5.7 तत्त्वं; T G1.6 ततः; G3 स त्वं (for तं त्वं). Da4 -शोचतो. G2 तत्र किं त्वनुशोचसि.

36 Ś1 K1.2.4 om. 36 (cf. v. l. 27, 29). — c) Bo तया (for तव). — d) G2 सफलस्य (for सपुत्रस्य). D7 भविष्यसि (for °ष्यति).

37 Ś1 K1.2.4 om. 37 (cf. v. l. 27, 29). — a) Dn4 पुत्र स्व-; T G1-3.6 स्वां पुत्र-; M1.5-7 पुत्रस्य (for स्वपुत्र-). — b) Da4 [ऽ]नपगः; Ds1 °पर्गां; G1 [ऽ]नुपगां; G2 [ऽ]नवमां; G3 [ऽ]नुवशां (for ऽनपगां). — c) K6.7 B6-9 Da3.a4 D4.9 द्रक्ष्यसि; Dn4 ईक्षते; Ds2 ईक्ष्यसे; T1 द्रक्षसे (for द्रक्ष्यसे). G2 वै लोके (for लोकेऽस्मिन्). — d) Da4 महान् (for महा-).

38 Before 38, K7 B8.9 D9 ins.: भीष्म उवाच. — a) K1 सूनुनीतं (sic); K6 सोनुनीता. — b) K1.2 भद्रेण (for रु°). — c) K2.4.7 छाया (for छायां). K2 समावृत्तौ; K4 °वृत्तिं; D5 °वृत्तिः; T G1.3.6 M5.6 परावृत्तः; G2 पुरावृत्तां; M1.7 पुरावृत्तः (for समा°). — d) Ś1 K1.2.4 मुनिः परमया स(K1 °यास्त)-दा; D5 स मुनिः परयास्तदा.

39 a) G2 इतीशसं (sic) (for इति जन्म). — c) K6 Bo.6-9 Da3.a4 Dn1.n4 Ds D2.3.8 समाख्याता; D5.7 समाख्यातं; G2 M5.6 मयाख्याता (for मयाख्यातं). — d) M1.5-7 मा (for मां). K7 D9 -पृष्टवान् (for -पृच्छसि).

40 a) G1 आचक्ष्व (for °ष्ट). — b) B7.8 (marg.) तथा; G2 प्रभुः (for पुरा). — c) The portion from श्चैव up to वैखानस (in 12. 325. 4[102]) is lost in D7 on missing fol. — d) Ś1 K1.2.4.7 D4.9 संकल्पेषु; Da4 संत्यजेषु; T1 संजल्पे तु; Cs (gloss: गोष्ठिषु) °ल्पेषु (as in text). G6 संजजल्पे पदे पदे. ❀ Cs: पदे पदे, प्रतिक्षणम् । ❀

41 D7 missing (cf. v. l. 40). — a) K7 D4.9 इदं (for इमं). — b) K6 Bo.6-9 Da3.a4 Dn1.n4 Ds D2.3.5.8 -धर्मोप- (for -धर्मार्थ-). K6 B6.7.9 Da3.a4 -शोभितं (for -संहितम्). — c) Bo.7.8 समपरः (for शम°).

Colophon. V1 D6.7 missing: K3.5 B1-5 Da1.a2 Dn2.n3 D1 G4.5 M2-4 absent. — *Sub-parvan:* Ś1 K1.2.4.6.7 Bo.6-8 Da3.a4 Dn1.n4 Ds D2-5.8.9 T G1-3.6 M1.5-7 मोक्षधर्म. — *Adhy. name:* Ś1 K1.2.4.7 B7-9 Da3.a4 D4.5.9 M1.5-7 शुकाभि(K4.7 D4.5.9 °ति)पतनं समाप्तं; K6 B6 शुकाभिपतनं; Bo Dn1 Ds2 D2.3.8 शुकोत्पतनं समाप्तं; Dn4 Ds1 शुकोत्पतनं; T1 G2.3.6 शुकाभिप(G2 °पा)तनसमाप्तिः; M1.5-7 (also) शुकसिद्धिः. — *Adhy. no.* (figures, words or both): K6 59; B7 Dn4 Ds2 T1 G6 157; B8 161; Dn1 159; Ds1 154; D8 164; T2 170; G1 156; G2 174; G3 158; M1.6.7 153; M5 189. — *Śloka no.:* Da4 Dn1.n4 42; D8 41.
— After the colophon, T2 ins.:

श्लोकानां च सहस्राणि कीर्तितानि चतुर्दश ।
पञ्च चैव शतान्याहुः पञ्चविंशतिसंख्यया ।

अक्षयनामसंवत्सरकार्तिकशुद्धषष्ठी आदिवारं । मुद्दपपुवेंकय्यगार्कि भट्टि प्रोलु अहोबलं व्राशिन, शांतिपर्वं संपूर्नम् ।

# ३२१

C. 12. 12650
B. 12. 335(4).1
K. 12. 342. 1

युधिष्ठिर उवाच ।

गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः ॥ १
कुतो ह्यस्य ध्रुवः स्वर्गः कुतो निःश्रेयसं परम् ।
विधिना केन जुहुयाद्दैवं पित्र्यं तथैव च ॥ २
मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः ।
स्वर्गतश्चैव किं कुर्याद्येन न च्यवते दिवः ॥ ३
देवतानां च को देवः पितॄणां च तथा पिता ।
तस्मात्परतरं यच्च तन्मे ब्रूहि पितामह ॥ ४

भीष्म उवाच ।

गूढं मां प्रश्नवित्प्रश्नं पृच्छसे त्वमिहानघ ।
न ह्येष तर्कया शक्यो वक्तुं वर्षशतैरपि ॥ ५
ऋते देवप्रसादाद्वा राजञ्ज्ञानागमेन वा ।
गहनं ह्येतदाख्यानं व्याख्यातव्यं तवारिहन् ॥ ६
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ ७
नारायणो हि विश्वात्मा चतुर्मूर्तिः सनातनः ।
धर्मात्मजः संबभूव पितैवं मेऽभ्यभाषत ॥ ८

---

## 321

☞ This adhy. is missing in V1 D6.7 ( cf. v. l. 12. 318. 1; 283. 15; 320. 40 ).

1 G3 om. the ref. $1^{ab}$ is partly damaged in D4. — $^{a}$) K6 B7 D9 T2 G1 M1.5–7 च (for वा). K7 ब्रह्मचारी गृहस्थश्च. — $^{b}$) K1 नावप्रस्थो (for वानप्रस्थो). T2 च (for ऽथ). — $^{c}$) K7 आस्थाय (for °तुं). ❀ Cs: सिद्धिं, मोक्षम् । ❀ — $^{d}$) Da4 M7 का (for कां).

2 $^{a}$) G2 हि स्याद् (for ह्यस्य). T2 G1 ध्रुव- (for ध्रुवः). T2 -स्वर्गं. — $^{b}$) Da3 Dn1. n4 Ds T1 G3.6 नैःश्रेयसं; Da4 D3.5 G2 निश्रे°; T2 G1 M1.5–7 नैश्रे° (for निःश्रे°). ❀ Cs: निःश्रेयसोपदेशपरं शास्त्रं कुतो जातम्, केन प्रणीतम् । ❀ — $^{c}$) K1 को नु (for केन). — $^{d}$) K7 Da3. a4 Ds D4 T2 G2 M1.7 देवं (for दैवं). K7 D9 पित्रं; Ds1 पैत्र्यं (for पित्र्यं). K6 B6–9 Da3. a4 T G1–3.6 M1.5–7 अथापि वा ( B6–9 Da3. a4 G1.3 च ) (for तथैव च).

3 $^{a}$) Ś1 K1.2.4 तु (for च). Da3. a4 सं- (for कां). — $^{d}$) M1.5.6 कथं (for येन). T2 दिवं (for दिवः). K1.2.4 येन न च्य( K2 च्य )वते नरः.

4 $^{a}$) G2 के देवाः. — $^{b}$) K1.4 Da4 D5.9 G1 पितृणां. K6 B0.6–9 Da3. a4 Dn1. n4 Ds D2.3.8 T G1–3.6 M1.5–7 transp. तथा and पिता. — $^{c}$) T1 G1–3.6 सृष्टेः; T2 सृष्टिः (for तस्मात्). K1.2 D5 यश्च.

5 D4 om. $5^{a}$–$6^{b}$. — $^{a}$) K7 गूह्य; D9 गुह्यं (for गूढं). M1.7 मत्-; M5.6 मा (for मां). — $^{b}$) K6.7 B6.7.9 Da3. a4 D5.9 T G3.6 पृच्छसि (for °से). B7 इहागतः (for °नघ). G2 अपृच्छस्त्वमहोनघ. — $^{c}$) G2 तस्य (for न हि). K4.6 B0.6.8.9 Da3. a4 Dn1. n4 Ds D2.3.8 एतत् (for एष). K6.7 D5 तर्कतः; B0 तु मया; T1 G3.6 वै मया; G1 तत्कथा; G2 विषयः; Ca (gloss: अनुमानदृशा) Cn (gloss: आर्षो लिङ्गव्यत्ययः) Cp (gloss: स्वबुद्धिसौष्ठवेन) Cs (gloss: स्वोत्प्रेक्षामात्रया) तर्कया (as in text). K6 B0.9 Dn1. n4 Ds D2.3.8 शक्यं; B6 शक्या (for शक्यो). — $^{d}$) Da4 तर्तुं (for वक्तुं).

6 D4 om. $6^{ab}$ (cf. v. l. 5). — $^{a}$) G2 देव- (for ऋते). Ś1 K1.2 D5.9 वै (for वा). — $^{b}$) M1.7 ज्ञानगमेन (for ज्ञाना°). D5 च (for वा). — $^{c}$) Ś1 K1.2 च (for हि). Ś1 K1 Dn4 M1.5.6 आख्यातं (for °नं). — $^{d}$) Da3. a4 त्वया (for तव). Ś1 K1.2.4 यन्मां त्वं परिपृच्छसि.

8 Before 8, G1 ins. नारदः. — $^{a}$) B6 lacuna; T1 G2.3.6 [ऽ]थ; M7 [ऽ]पि (for हि). K1 नारायणो विश्वात्मा च. — $^{b}$) B6 damaged; Dn1 स्वयंभुवः (for सनातनः). ❀ Cn: चतस्रो मूर्तयः, नराद्याः । ❀ — $8^{cd}$ damaged in B6. — $^{c}$) Da4 धर्मात्मजं; G1 °त्मासौ; G2 °त्मनः; M7 °त्मज (for °त्मजः). — $^{d}$) K1 Ds1 पितैव. Da4 [ऽ]त्यभाषत; G1 M6 ह्यभाषत (for ऽभ्य°). K2 पितेव प्रत्यभाषत; D6 पितैवमभ्यभाषत; G2 पितेव मामभाषत; Ca पिता मामभ्यभाषत.

कृते युगे महाराज पुरा स्वायंभुवेऽन्तरे ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥ ९
तेभ्यो नारायणनरौ तपस्तेपतुरव्ययौ ।
बदर्याश्रममासाद्य शकटे कनकामये ॥ १०
अष्टचक्रं हि तद्यानं भूतयुक्तं मनोरमम् ।
तत्राद्यौ लोकनाथौ तौ कृशौ धमनिसंततौ ॥ ११
तपसा तेजसा चैव दुर्निरीक्ष्यौ सुरैरपि ।
यस्य प्रसादं कुर्वाते स देवौ द्रष्टुमर्हति ॥ १२
नूनं तयोरनुमते हृदि हृच्छयचोदितः ।
महामेरोर्गिरेः शृङ्गात्प्रच्युतो गन्धमादनम् ॥ १३
नारदः सुमहद्भूतं लोकान्सर्वानचीचरत् ।
तं देशमगमद्राजन्बदर्याश्रममाशुगः ॥ १४
तयोराह्निकवेलायां तस्य कौतूहलं त्वभूत् ।
इदं तदास्पदं कृत्स्नं यस्मिँल्लोकाः प्रतिष्ठिताः ॥ १५
सदेवासुरगन्धर्वाः सर्षिकिंनरलेलिहाः ।
एका मूर्तिरियं पूर्वं जाता भूयश्चतुर्विधा ॥ १६
धर्मस्य कुलसंतानो महानेभिर्विवर्धितः ।
अहो ह्यनुग्रहीतोऽद्य धर्म एभिः सुरैरिह । C. 12. 12666 B. 12. 335[4].17 K. 12. 342.17

---

9 $^{a}$) Dn1 om. from महाराज up to बदर्याश्र (in 10$^{a}$). — $^{b}$) K2 परा (for पुरा). K2.7 D4.5.9 M1.7 स्वा( K2.7 स्व )यंभुवांतरे. — $^{c}$) M1.7 नमो (for नरो). — $^{d}$) Da4 हरिं. K6 Bo.6–9 Da3.a4 Dn4 Ds D2.3.8 Cn स्वयंभुवः (for तथैव च). ❀ Cn: स्वयंभुव इत्येतेन वासुदेवस्यैते चत्वारो व्यूहाः अजन्मानः । तेन तु पाञ्चरात्राणामिव वासुदेवात्परमकारणात्संकर्षणाख्यो जीव उत्पद्यते, ततः प्रद्युम्नाख्यं मनः जायते, ततोऽनिरुद्धाख्योऽहंकार उत्पद्यते इति मतं निरस्तम् (cf. Śaṁkara on Br. S. II. ii. 34) । ❀

10 Dn1 om. up to बदर्याश्र (cf. v. l. 9). — $^{a}$) K6 Bo.6–9 Da3.a4 Dn4 Ds D2.3.8 M1.6.7 तेषां; T G1.3.6 तत्र (for तेभ्यो). G2 नरनारायणौ रौद्रं. — $^{b}$) M1.6.7 अव्ययं (for °यौ). — $^{d}$) Bo सकटे; Cn (gloss: शकटवत्परप्रेर्ये शरीरे) शकटे (as in text). D5 कनकालये (for °मये). ❀ Cs: कनकमये शकटे रथे स्थितौ तपस्तेपतुः, निवृत्तिधर्मं चक्रतुरित्यर्थः । ❀

11 11 is partly damaged in B6. — $^{a}$) B9 अंत- (for अष्ट-). Ś1 K1.2 महद्यानं; K6 हि तद्यातं; B7 हितत्वान (sic) (for हि तद्यानं). Da4 अष्टचक्रे हि तद्यंतं. ❀ Cs: अव्यक्तमहदहंकारमहाभूतरूपैरष्टभिश्चक्रैर्युक्तम् । ❀ — $^{b}$) Ś1 K1.2.4 सनातनं; K6 B3 (orig.) T2 मनोमयं; B8 (marg.) °हरं (for °रमम्). — $^{c}$) K1 यथाद्यौ; K6 Bo.8.9 Da3.a4 Dn4 यत्राद्यौ; Ds1 यत्र द्वै; G2 तत्र यौ (for तत्राद्यौ). D5 द्वौ (for तौ). — $^{d}$) K6 कृष्णौ (for कृशौ). B9 कृशोधमपिसंततौ (sic); Dn4 कष्टौ शोषनिसंततौ.

12 $^{b}$) B6–9 Da3 Dn1 D8.9 T G2.3.6 M1.7 दुर्निरीक्ष्यौ (for °रीक्षौ). — $^{c}$) Ś1 K1.2 कुर्वातः; K7 कुरुत; Dn1 कुर्वाते; Dn4 कुर्वात; D4 कुरुतः; D9 कुतश्चित्; G2 कुरुते (for कुर्वाते). — $^{d}$) Ś1 K2 च तं; K7 च तौ; B3 (orig.) चैतौ; B8 (marg.) तौ वै; D4.9 वैतौ; D5 चेतौ; G2 देवान् (for देवौ).

13 $^{a}$) Ś1 K1.2 एव ** (for अनुमते). — $^{b}$) K1 -शोचितः; K4 -शोदितः; D4.5 -नोदितः (for -चोदितः). ❀ Ca: हृच्छयोऽत्रान्तरात्मा ॥ Cn: अन्तर्यामी । ❀ — $^{c}$) Ś1 K1.2 महामेरु- (for °मेरोर्). — $^{d}$) K7 D4.9 आश्रितो (for प्रच्युतो). B7 M1 गंधमादनः; D5 °मादनान्.

14 $^{a}$) Ds2 नारदः स; D5 °दस्य (for °दः सु-). Csp सत्त्वं (for भूतं). — $^{b}$) K6 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 T G1–3.6 M5.7 सर्वलोकान्; M1.6 सर्वाल्लोँकान् (by transp.). The portion from नचीचरत् up to स (in B. 12. 343[2]. 54$^{a}$) is lost in Ś1 on missing fol. K7 D4.9 चचार ह; D5 अचीचरन्; T G1–3.6 वशीचरन् (T1 G3.6 °त्) (for अचीचरत्). — $^{c}$) K6 B7.9 Da4 M1.5–7 स (for तं). — $^{d}$) K2 corrupt. K7 D4.9 आगतः (for आशुगः).

15 Ś1 missing (cf. v. l. 14). — $^{a}$) K1 अह्निक-. G2 -वेळायां. Dn4 तपोह्नीकेवलायां च. — $^{b}$) T1 G3.6 तद्धि; G2 तर्हि (for तस्य). K1.2 तु भूत्; B9 T2 ह्यभूत् (for त्व°). — $^{c}$) Da3.a4 इमं (for इदं). K1.2 कृत्स्ना (for कृत्स्नं). ❀ Cn: आस्पदम्, अधिष्ठानम् । ❀ — $^{d}$) B8 यदि (for यस्मिँल्).

16 Ś1 missing (cf. v. l. 14). — $^{b}$) K6 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.8 T G1–3.6 सकिंनरमहोरगाः (B9 Da4 °गः). — $^{c}$) K7 एक- (for एका). B9 G2 पूर्वा (for पूर्वं). — $^{d}$) K6 G6 मूर्तिश्च (for भूयश्च). K7 D4.9 M1.6.7 चतुर्विधाः; D8 °विधं.

17 Ś1 missing (cf. v. l. 14). — $^{a}$) K2 कुशलं;

C. 12. 12667 B. 12. 335[4]. 18 K. 12. 342. 18 नरनारायणाभ्यां च कृष्णेन हरिणा तथा ॥ १७
तत्र कृष्णो हरिश्चैव कस्मिंश्चित्कारणान्तरे ।
स्थितौ धर्मोत्तरौ ह्येतौ तथा तपसि धिष्ठितौ ॥ १८
एतौ हि परमं धाम कानयोराह्निकक्रिया ।
पितरौ सर्वभूतानां दैवतं च यशस्विनौ ।
कां देवतां नु यजतः पितॄन्वा कान्महामती ॥ १९
इति संचिन्त्य मनसा भक्त्या नारायणस्य ह ।
सहसा प्रादुरभवत्समीपे देवयोस्तदा ॥ २०
कृते दैवे च पित्र्ये च ततस्ताभ्यां निरीक्षितः ।
पूजितश्चैव विधिना यथाप्रोक्तेन शास्त्रतः ॥ २१
तं दृष्ट्वा महदाश्चर्यमपूर्वं विधिविस्तरम् ।
उपोपविष्टः सुप्रीतो नारदो भगवानृषिः ॥ २२
नारायणं संनिरीक्ष्य प्रसन्नेनान्तरात्मना ।
नमस्कृत्वा महादेवमिदं वचनमब्रवीत् ॥ २३
वेदेषु सपुराणेषु साङ्गोपाङ्गेषु गीयसे ।
त्वमजः शाश्वतो धाता मतोऽमृतमनुत्तमम् ।

---

T G1–3.6 किल (for कुल-). Dn1 Ds D2.3.8 M1.5–7 -संताने (for °नो). —[b]) K6 B6 (marg.).7.9 Da3.a4 Dn4 Ds2 D2.8 धर्मादेभिर्; K7 B0 Dn1 Ds1 D3.5 धर्मादिभिर्; B6 (orig.) धर्मादति-; T2 G2 धर्म एव; G1 M1.5–7 धर्मं एभिर् (for महानेभिर्). K2.4 Dn1 Ds G1 विवर्धिताः; K7 D4.9 °र्धते; Da1 °र्धतः; G2 °र्धितं; M5 °र्धिते (for °र्धितः). T1 G3.6 धर्म एवाभिवर्धितः. —[c]) K1.2 G3 अहोनु-; D5 °प्यनु- (for अहो ह्यनु-). B8 अहो ह्यत्र गृहीतोत्र. —[d]) D8 सुतैर् (for सुरैर्). D5 अपि (for इह). —[e]) K1.2.4 हि (for च). —[f]) K6 तदा (for तथा).

18 Ś1 missing (cf. v. l. 14). —[a]) K6 B0.6–9 Da3.a4 Dn1.n4 Ds2 D2.3.8 T G1–3.6 M5 अत्र (for तत्र). K6 B0 Da3 नरश् (for हरिश्). —[c]) K2 धर्मोत्तरे; K7 D4.5.9 °त्तमे; B6.7 °त्तमौ (for °त्तरौ). K1.4 स्थितौ धर्मोत्तमे ह्येतौ (K4 °ते); T G1–3.6 M5 (*sup. lin.*) स्थितौ धर्मसुतावेव; M1.5 (orig.).6.7 स्थितौ (M1.7 °तो) धर्मस्य तौ (M6 om. तौ) गेहे. ❀ Cs: धर्मस्वभावेन स्थितौ, प्रवृत्तिधर्मकरावेव स्थितौ । ❀ —[d]) M1.5–7 इमौ (for तथा). K1.2.4 निष्ठितौ; K6 [अ]धि°; B0.6–9 Da3.a4 M1.5–7 वि° (for धि°). T G1–3.6 M5 (*sup. lin.*) तथैतौ परिनिष्ठितौ.

19 Ś1 missing (cf. v. l. 14). —[a]) G2 गतौ; M6 एते (for एतौ). Da3.a4 परमौ (for °मं). —[b]) K6.7 D4.9 T G1–3.6 का तयोर्; Ds D2.8 कालयोर् (for कानयोर्). K1 D5 आह्निका; Da3.a4 आह्निकी (for °क-). —[d]) B8 सनातनौ; M1.7 यशस्विने (for °स्विनौ). K1.2.4 देवतानां (K2 °तस्य) सनातनौ; K7 D4.5.9 देवतानां च दैवतं. —[e]) K4.6.7 B0.7–9 Da3.a4 Dn1.n4 Ds D2.3.8 T1 G2.3.6 तु; B6 च (for नु). T2 G1–3.6 यजतां; M1.7 °तं (for °तः). —[f]) K2 पितॄन्कामान्; B6 Da4 D5 पितॄन्कान्वा; M1.6.7 पितृपाकान् (for पितॄन्वा कान्). K1 महामतीः; B6.8 (marg.) T1 G6 °द्युती; B8 (orig.) Ds2 °मतीन् (for °मती).

20 Ś1 missing (cf. v. l. 14). —[b]) K1 (also as in text).7 Da3.a4 D4.5.9 च; K6 B0.6–9 Dn1.n4 Ds D2.3.8 तु; T G1–3.6 हि (for ह). —[d]) K2 दैवयोस् (for दे°). K1.2.4.7 B6 D4.5.9 तयोः (for तदा).

21 Ś1 missing (cf. v. l. 14). —[a]) Da4 कृतौ (for कृते). G1.2 देवे (for दैवे). K1.7 पित्रे. —[b]) Dn4 ताभ्यो (for ताभ्यां). K2.4 निरीक्षत; K7 D4 निरीक्ष्य(D4 °क्ष)तः; T2 °क्षतं (for °क्षितः). —[c]) M1 पूजितं. —[d]) K1.2.4.7 D4.5.9 यथादृष्टेन शास्त्रतः.

22 Ś1 missing (cf. v. l. 14). —[a]) K6.7 B6–9 Da3 Dn1 Ds D3.8.9 G1.2 तद् (for तं). D8 (marg. as in text) त्रिविधाश्चर्यम् (for महदा°). —[b]) K2.4 स पूर्वं; K6 B0.7.9 Ds1 D5 M1.5–7 Cs अपूर्व- (for °र्वं). D5 -विधिपूर्वकं; G2 विधिवत्तरं (for °विस्तरम्). ❀ Cs: अपूर्वविधिविस्तरम्, प्रवृत्तिबहुलेषु लोकेषु अदृष्टपूर्वं विधिविस्तरम् । ❀ —[c]) Da4 उपोपतिष्ठः; G2 °विष्टं. —[d]) T2 ऋषिं. D4.9 नारदः सुमहानृषिः.

23 Ś1 missing (cf. v. l. 14). —[b]) K1 [अं]तरात्मनः. —[c]) K1.2 D4.5.9 T2 G1.2 M1.5–7 नमस्कृत्य (for °स्कृत्वा).

24 Ś1 missing (cf. v. l. 14). Before 24, K1.2.4.6.7 B0.6–9 Da3.a4 Dn1.n4 Ds D2–5.8.9 G3 M1.5–7 ins. नारद उवाच. —[a]) K7 G2 च (for स-). —[b]) B7 (marg. as in text) Da4 D5 गीयते; M1.7 नीयसे (for गी°). —[c]) Ds1 ज्ञाता (for धाता). —[d]) K7 B8 (marg.) Da3.a4 D4.9 माता (for मतो). K1.

प्रतिष्ठितं भूतभव्यं त्वयि सर्वमिदं जगत् ॥ २४
चत्वारो ह्याश्रमा देव सर्वे गार्हस्थ्यमूलकाः ।
यजन्ते त्वामहरहर्नानामूर्तिसमास्थितम् ॥ २५
पिता माता च सर्वस्य जगतः शाश्वतो गुरुः ।
कं त्वद्य यजसे देवं पितरं कं न विद्महे ॥ २६

श्रीभगवानुवाच ।

अवाच्यमेतद्वक्तव्यमात्मगुह्यं सनातनम् ।
तव भक्तिमतो ब्रह्मन्वक्ष्यामि तु यथातथम् ॥ २७
यत्तत्सूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवम् ।
इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैश्च वर्जितम् ॥ २८
स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते ।
त्रिगुणव्यतिरिक्तोऽसौ पुरुषश्चेति कल्पितः ।
तस्माद्व्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ॥ २९
अव्यक्ता व्यक्तभावस्था या सा प्रकृतिरव्यया ।
तां योनिमावयोर्विद्धि योऽसौ सदसदात्मकः ।
आवाभ्यां पूज्यतेऽसौ हि दैवे पित्र्ये च कल्पिते ३० C. 12. 12682 B. 12. 335(4). 32 K. 12. 342. 33

---

2. 4 मृ( K1 म )तो मेमृतमुत्तमं; D5 मरुतोमृतमुत्तमं; T G1–3. 6 विधाता मृत्युरुत्तमः; M1. 5–7 विधातामृतमुत्तमं. — e ) K1. 2. 4 D5 त्वं विधाता च सततं.

25 Ś1 missing ( cf. v. l. 14 ). — a ) G2 [ऽ]पि ( for हि ). B7 दैव; Da4 Ds2 देवाः ( for देव ). — b ) K4. 6. 7 Dn4 D4 गार्हस्थ- ( for °स्थ्य- ). Da4 -मूलक; T2 °कां; G2 °गाः ( for °काः ). — d ) K2 -समास्थितां; B9 -समस्थितं ( for -समा° ). G1 नानामूर्तिः समास्थितः; G2 °मूर्तमवस्थितं.

26 Ś1 missing ( cf. v. l. 14 ). — a ) Da3. a4 सततं; G2 सर्वेषां ( for सर्वस्य ). — b ) K7 D4. 9 T G1. 3. 6 M1. 5–7 देवतानां ( T G1. 3. 6 M1. 5–7 दैवतत्वं ) च शाश्वतं; G2 देवानां चापि शाश्वतं. — Da3. a4 om. 26[cd]. — c ) D5 किं; M1 तं ( for कं ). T2 च ( for तु ). M1. 6. 7 यजते ( for °से ). B7 त्वं यद्यद्यजसे नित्यं; T1 G2. 3. 6 कं देवं यजसे नित्यं. — d ) Dn1 ते; D5 किं ( for कं ). B3 ( marg. ) न वेद्म्यहं; T1 G2. 3. 6 तु ( G3 नु ) मन्यसे; G1 M1. 5–7 नु ( M7 न ) विद्म ते ( for न विद्महे ). T2 पितरः के नु वाद्य ते. — After 26, T G1–3. 6 M1. 5–7 ins.:

800* कमर्चासि महाभाग तन्मे ब्रूहीह पृच्छतः ।

[ G2 कंदर्प सुमहाभाग ( for the prior half ). T2 G1 M1. 5–7 प्रब्रूहि ( for ब्रूहीह ).]

27 Ś1 missing ( cf. v. l. 14 ). K6 नारायण ( for श्रीभगवान् ). — a ) K7 D4. 9 रहस्यम्; Da4 आवाच्यम्; Ds1 Cs आवाभ्याम्. — b ) B8 पुरातनं ( for सना° ). — c ) M6 भव ( for तव ). — d ) K1. 2. 4 यथा तथा. K7 D4. 5. 9 प्रवक्ष्यामि तु ( K7 D5 om. तु ) यथातथं.

28 Ś1 missing ( cf. v. l. 14 ). 28[ab] is quoted in Ved. Sū. Śaṁ. Bhāṣya, II. i. 1. — a ) K4 एतत्; D8 तत्तत् ( for यत्तत् ). D5 यतस्तु सूक्ष्मविज्ञेयम्; G2 प्रयत्नं सूक्ष्मवि°. — b ) ❀ Cp: अव्यक्तं, मायापटेनावृतम् ॥ Cs: विकाररहितम् । ❀ ❀ Cn: अचलं, कूटस्थम् ॥ Cp: विक्षेपरहितम् । ❀ — d ) T2 G1. 3 M1. 5–7 विवर्जितं; G2 विस° ( for च व° ). — After 28, K1. 2. 4 read 30.

29 Ś1 missing ( cf. v. l. 14 ). 29[ate/] quoted in Ved. Sū. Śaṁ. Bhāṣya, II. i. 1. — a ) M1. 5–7 सोऽयं-तरात्मा ( for स ह्यन्त° ). — b ) K1. 2. 4. 7 D4. 9 क्षेत्रज्ञः परिकीर्त्यते. — c ) Da3 Dn1. n4 Ds D2. 3. 8 T1 G6 वै; T2 वा ( for ऽसौ ). K2. 4 त्रिगुणाव्यतिरिक्तोसौ. — d ) K1. 2. 7 B8 ( marg. as in text ) D3 ( before corr. ). 4. 9 कथ्यते ( for कल्पितः ). ❀ Cn: पुरि शरीरे वसतीति योगात्पुरुष इति कल्पितः । न तु तस्य देहसङ्गित्वं वास्तवम् । ❀ — f ) M5 मुनि- ( for द्विज- ).

30 Ś1 missing ( cf. v. l. 14 ). B0 om. 30. K1. 2. 4 read 30 after 28. — a ) Dn1 अव्यक्त-; D4 T2 G1. 2 M1. 6. 7 °क्ताद् ( for °क्ता ). Ds D2. 3 व्यक्ति- ( for व्यक्त- ). — b ) B9 चाकृतिर् ( for प्र° ). ❀ Ca: या सा प्रकृतिरव्यया, वासुदेवाख्या, सर्वगता, ईश्वरापरपर्याया ॥ Cn: या सत्ता, स्वयमव्यक्ता, व्यक्तेषु भावेषु घटः सन्, पटः सन्, इति सद्रूपेण तिष्ठति, सैव सत्ता अव्यया । ❀ — c ) ❀ Cn: आवयोः, जीवेश्वरयोः ॥ Cs: आवामनिरुद्धांशावित्यर्थः । ❀ — d ) T G1–3. 6 या सा सदसदात्मिका. ❀ Cp: सदसदात्मकः, कार्यकारणात्मा । ❀ — e ) G2 त्वया सं- ( for आवाभ्यां ). K2. 7 Ds2 ( before corr. ) D4. 5. 9 पूजितो ( for पूज्यते ). K7 D4. 9 G1 यो; B6–9 Dn1 Ds D2. 3. 5. 8 M1. 5–7 सो; T2 [ऽ]यं ( for ऽसौ ). M1. 5–7 [ऽ]थ ( for हि ). — f ) Da4 D4 G2 देवे ( for दैवे ). K7 पित्रे; Ds1 पैत्र्ये. K2 कंपिते; K6 B8 ( marg. ). 9 Dn1 Ds D2. 8 कल्प्यते; K7 कल्पिता; B6. 7 Da3 Dn1 D3. 5 कल्पते ( for कल्पिते ).

तेन मे कथितं पूर्वं नाम क्षेत्रज्ञसंज्ञितम् ।
प्रादुर्भावाश्च कथिता भविष्यन्ति हि ये यथा ॥ ४०
तत्र ये पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः ।
प्रतिबुद्धाश्च ते सर्वे भक्ताश्च पुरुषोत्तमम् ॥ ४१
तेऽर्चयन्ति सदा देवं तैः सार्धं रमते च सः ।
प्रियभक्तो हि भगवान्परमात्मा द्विजप्रियः ॥ ४२
रमते सोऽर्च्यमानो हि सदा भागवतप्रियः ।
विश्वभुक्सर्वगो देवो बान्धवो भक्तवत्सलः ।
स कर्ता कारणं चैव कार्यं चातिबलद्युतिः ॥ ४३
तपसा योज्य सोऽऽत्मानं श्वेतद्वीपात्परं हि यत् ।
तेज इत्यभिविख्यातं स्वयंभासावभासितम् ॥ ४४
शान्तिः सा त्रिषु लोकेषु सिद्धानां भावितात्मनाम् ।
एतया शुभया बुद्ध्या नैष्ठिकं व्रतमास्थितः ॥ ४५
न तत्र सूर्यस्तपति न सोमोऽभिविराजते ।
न वायुर्वाति देवेशे तपश्चरति दुश्चरम् ॥ ४६
वेदीमष्टतलोत्सेधां भूमावास्थाय विश्वभुक् । C. 12. 13363 B. 12. 344(2).60 K. 12. 353.60

कथितः कृत्स्नो. — b) D7 T2 याम; G1. 3. 6 धाम; G4 यन्मे (for नाम). K6 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 M1. 5–7 Kumbh. ed. धर्मः क्षेत्रज्ञसंज्ञितः; V1 धाम क्षेत्रज्ञसंहितं. — c) D5 G2 प्रादुर्भावश्च; T2 °र्भावाच्. D3 विविधा; G2 कथितस् (for °ता). — d) K2 हि मे; K6 च ये; D7 T2 भवे; T1 G3. 6 M1. 5–7 [इ]ह ये; G1 ह ये (for हि ये). T1 G3. 6 तथा (for यथा). V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. भविष्या इह ये यथा; G2 तेन पूर्वं भवे यथा.

41 a) K7 D8 D4. 9 ते (for ये). ❀ Cs: श्वेताः, शुद्धाः । ❀ — b) ❀ Cs: पञ्चेन्द्रियविवर्जिताः, सदा योगरूढत्वात् अवहिर्निष्क्रान्तेन्द्रियाः, निरन्तरं परमात्मानुसंधाने स्थिताः ॥ Cv: पञ्चेन्द्रियविवर्जिताः, प्राकृतपञ्चेन्द्रियरहिताः । ❀ — c) K2. 7 D4. 5. 9 हि (for च). G2 ये (for ते). K1 प्रतिबुद्धा हि मे सर्वे. — d) K2 भक्तयाश्च; K7 D4. 5. 9 भक्तास्तु (for °श्च). K2 पुरुषोत्तम; K7 D8 D4. 9 T1 G2. 3. 6 °त्तमे (for °त्तमम्).

42 a) D9 अर्चयंति (for तेऽर्चयन्ति). — b) K1. 2. 4 D5 हरिः; G2 च सत्; G5 च यः (for च सः). T2 परमात्मैव स प्रियः.

43 K1. 7 D5 G2 om. (hapl.) 43ab. — a) K2 M1. 5–7 योऽर्च्य(M5 °र्च)मानो; V1 G1 सेव्य°; Da4 D3 सोर्घ्य° (for सोऽर्च्य°). — b) V1 सदा च भगवान्प्रियः; B0 Da4 सदा भा(B0 स)गवतः प्रियः; D4. 9 °वतैः प्रियः; G8 सदा भगवतप्रियः. — c) T1 G3. 6 विश्वसृक् (for °भुक्). — d) K1 बंधवो; K7 B7. 8 Da4 Dn1. n4 D8 D2–5. 7–9 माधवो (for बान्धवो). B8 (marg.) भक्ति- (for भक्त-). — G2 om 43ef. — e) V1 करणं (for का°). — f) Dn1 चातिबलं (for °बल-). K1. 2. 4. 7 V1 D4. 9 कार्यं चैव महाद्युतिः; D5 सकार्यं महाद्युतिः (submetric). — After 43, K6 V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 8 Kumbh. ed. ins.:

887* हेतुश्चाज्ञाविधानं च तत्त्वं चैव महायशाः ।

[ Da3. a4 महामनाः (for °यशाः). ]

44 a) K4 तवसा (for तपसा). V1 B6 D8 D3. 7 T G1–3. 6 M1. 6. 7 चात्मानं (for सोऽऽत्मानं). K1. 2 तवसा योज्यमात्मानं; K7 तपसा युज्यसेत्मानं. — b) K2 Da4 -द्वीपापरं (for -द्वीपात्परं). K1 तं; Dn1 D5 G2 तत् (for यत्). — c) M1. 5 (inf. lin.) 6. 7 श्वेत; M5 तम (for तेज). K6 -व्याख्यातं (for -विख्यातं). — d) D7 -भासितः (for °तम्). K1. 6 B6 Ds1 स्वयंभासावभाषितं; V1 °भिभासितं; D5 स्वयंनामावनामितं; T2 M7 स्वयंभावावभासितं (T2 °तः).

45 a) T2 G2 शांतिस्था (for शान्तिः सा). K6 साद्रिषु (for सा त्रिषु). ❀ Ca: शान्तिः, मुक्तिः । ❀ — b) D7 विशुद्धा; T विद्धानां; G2 शुद्धानां; M1. 5–7 विहिता (for सिद्धानां). K4 V1 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. विहिता भावितात्मना; K6 त्रिषु च विहितात्मना. — c) K1. 2. 7 V1 D4. 5. 9 स तया; D7 T G1–3. 6 एकया (for एतया). — d) Da3. a4 जपम् (for व्रतम्). M1. 6 आस्थितं (for °तः).

46 a) K7 transp. तत्र and सूर्यस्. — b) K7 lacuna; T G1–3. 6 हि (for ऽभि-). — c) D7 T G1–3. 6 M1. 5–7 transp. वायुर् and वाति. K1 V1 D7 T1 G1–3. 6 देवेशस्; K2 T2 °श; B8 वै देशे (for देवेशे). K7 न वायुकीर्तिदेवेशे (sic). — D5 om. (hapl.) 46d–47c. — d) K1. 2. 4 D7 T G1–3. 6 यत्र ह; V1 B8 यत्र सः (for दुश्चरम्).

47 D5 om. 47abc (cf. v. l. 46). — a) Ds1 वेदाम्; D7 T G1–3 वेदिम् (for वेदीम्). K1 V1 अष्टदलोत्सेधां; K4. 6. 7 B6 (marg.). 9 Dn1. n4 D8 D2. 3. 8

C. 12. 13354 B. 12. 344[3]. 60 K. 12. 353. 60 एकपादस्थितो देव ऊर्ध्वबाहुरुदङ्मुखः ।
साङ्गानावर्तयन्वेदांस्तपस्तेपे सुदुश्चरम् ॥ ४७
यद्ब्रह्मा ऋषयश्चैव स्वयं पशुपतिश्च यत् ।
शेषाश्च विबुधश्रेष्ठा दैत्यदानवराक्षसाः ॥ ४८
नागाः सुपर्णा गन्धर्वाः सिद्धा राजर्षयश्च ये ।
हव्यं कव्यं च सततं विधिपूर्वं प्रयुञ्जते ।
कृत्स्नं तत्तस्य देवस्य चरणावुपतिष्ठति ॥ ४९
याः क्रियाः संप्रयुक्तास्तु एकान्तगतबुद्धिभिः ।
ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ॥ ५०
न तस्यान्यः प्रियतरः प्रतिबुद्धैर्महात्मभिः ।
विद्यते त्रिषु लोकेषु ततोऽस्म्यैकान्तिकं गतः ।
इह चैवागतस्तेन विसृष्टः परमात्मना ॥ ५१

---

Kumbh. ed. Cn (gloss : नलवत्पर्वयुक्तत्वान्नलशब्देनाङ्गुलं ग्राह्यम्) °नलोत्सेधां; B7 °तलोत्साधं (for °तलोत्सेधां). ❀ Ca : अत्र तलशब्देन ताल उक्तः, तृणराज इत्येके । मध्यमाङ्गुष्ठस्य विततमात्रमिति तु तत्त्वम् । तेन चतुर्हस्तोच्छ्रितामित्यर्थः ॥ Cap : तलेति पाठेऽपि हस्तस्य तलमङ्गुलोच्छ्रायमेव भवति ॥ Cs : अष्टतालपरिमितोच्छ्रायां, प्रकृतिमहदहंकारपञ्चतन्मात्रात्मिकाम् । ❀ —$^{b}$) K2 भूमावस्थाय; V1 भूमिमास्थाय; D7 भूमावास्तां हि; T1 G1–3. 6 °वास्ते स; T2 °दास्त*; M1. 5–7 भौमामास्थाय (for भूमावा°). K6 विश्वहृत्; V1 B0. 6–9 Da3. a4 Dn1. n4 Ds D2, 3. 8 Kumbh. ed. °कृत् (for °भुक्). K7 D4. 9 तामास्थाय स विश्वकृत्. —$^{c}$) B8 -पादः स्थितो; Dn1 -पादास्थितो (for -पादस्थितो). K2 वेद (for देव). —$^{d}$) D7 औध्वर्बाहुर् (for ऊर्ध्व°). Da4 उदङ्मुखाः; Ds अधोमुखः. —$^{e}$) K2 वेदास्; T2 वेदस् (for वेदांस्). —$^{f}$) K1. 2. 4 G2 सु(G2 om. सु)दारुणं; D5 सुदुस्तरं; D7 T G1. 3. 6 [ऽ]तिदुष्क(G1 °स्क)रं; M1. 6. 7 [ऽ]तिदुश्चरं (for सुदु°).

48 $^{a}$) D7 T2 M1. 5–7 ब्रह्मा यद् (by transp.); T1 G3. 6 ब्रह्माथ; G1. 2 ब्रह्मा च. —$^{b}$) K2 चरत्; Da3. a4 यथा; T1 G3. 6 च यः; G2 च सः (for च यत्). —$^{c}$) K2 T1 विबुधाः (for °ध-).

49 $^{a}$) K2 नगाः (for नागाः). B0. 6. 8 D3. 4. 7 M1 सुपर्ण-; T1 G3. 6 यक्षाश्च (for सुपर्णा). —$^{b}$) B8 सिद्ध-; G2 साध्या (for सिद्धा). B8 M1. 5–7 यत्; T1 G3. 6 वै (for ये). — K2 reads 49$^{cd}$ twice. —$^{c}$) K2 (both times) V1 D4. 7 हव्य- (for हव्यं). K2 (both times). 4 कन्यां (for कव्यं). G2 तस्मिंस्तु (for सततं). —$^{d}$) K6 V1 B0. 6. 7. 8 (marg.). 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 M1. 5–7 Kumbh. ed. विधियुक्तं; B8 (orig.) °युक्ताः (for °पूर्वं). —$^{e}$) K4 V1 B7–9 Dn1. n4 Ds D2. 3. 8 Kumbh. ed. कृत्स्नं तु; K6 कृत्स्नं च; B0 कृत्स्नस्य; G1 कृत्स्नं तं (for कृत्स्नं तत्). —$^{f}$) K1. 2. 6 V1 B6. 7. 9 Da3. a4 Ds -तिष्ठते; K4 B0. 8 Dn1. n4 Ds D2. 3. 8 Kumbh. ed. -तिष्ठतः; D4 lacuna (for °ति).

50 $^{a}$) D7 T2 याः प्रियाः; G2 क्रिया याः (by transp.). K4. 6 B0. 7–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 Kumbh. ed. च; D7 हि; D9 ता; T1 G1. 3. 6 स्युर् (for तु). —$^{b}$) D4 om. from एकान्त up to प्रति (in 51$^{b}$). K7 D5. 9 -कृत-; V1 -गति- (for -गत-). ❀ Cn : एकान्तगतबुद्धिभिः, अव्यभिचरितबुद्धिभिः । ❀ — Da4 om. 50$^{c}$–51$^{b}$. —$^{c}$) K7 देव. —$^{d}$) K6. 7 D2. 8 प्रतिगृह्णाति. K7 हरिः (for स्वयम्).

51 Da4 om. 51$^{ab}$; D4 om. up to प्रति (for both, cf. v. l. 50). —$^{a}$) K6 न तस्यास्य; G2 न चास्त्यस्य (for न तस्यान्यः). D5 न तस्यान्येषु पितरः; D7 न तस्यान्याः प्रियतराः (sic). —$^{b}$) G2 प्रतिबुद्धेर्; Ca. s (gloss [both] : ज्ञानिभिः) °बुद्धैर् (as in text). — 51$^{cd}$ is damaged in B7. —$^{c}$) K7 D4. 9 तिष्ठते; D7 T2 विद्यंते. —$^{d}$) K1. 4 [ऽ]स्त्येकांतता; K2 M1. 5–7 [ऽ]स्म्ये(K2 °स्मे)कांततां; K6 D3 [ऽ]स्मैकांतिकं; K7 D4. 9 चैकांततां; V1 [ऽ]स्मैकांततां; B0. 6. 8 Dn4 Ds D2. 8 Kumbh. ed. [ऽ]स्यैकांतिकं; D5. 7 [ऽ]स्यैकांततो; T G1–3. 6 [ऽ]स्म्ये(T2 °स्यै-; G2 °स्मै)कांतिकां (G1. 3. 6 °तां) (for ऽस्म्यैकान्तिकं). ❀ Cs : ऐकान्तिकं, सर्वात्मभावम् । ❀ — 51$^{ef}$ is damaged in B6. —$^{e}$) T1 इतश्च (for इह). D7 चैव गतो. D7 T G1–3. 6 M1. 5–7 Kumbh. ed. [ऽ]स्म्यद्य (for तेन). —$^{f}$) V1 विसृष्टश्च महात्मना; Ds T2 °ष्टः परमात्मनः. — After 51, G1 ins. :

888* अनन्यदेवताभक्तिरनन्यमनुता हरेः ।
अनन्यसेव्यता विष्णोरनन्यार्च्यत्वमेव च ।
ब्रह्मरुद्रादिसाम्यत्वं बुद्धिराहित्यमेव च ।
अनन्यदेवालयगतिरनन्यभक्ताद्यवीक्षणम् ।
तथा कर्मफलासङ्गो ह्येकान्तित्वमिदं मतम् । [5]

52 $^{a}$) D4 एव (for एवं). K2 भगवन्. G1 देव. —$^{c}$) K2 आसिष्टे; K6. 7 B6–9 Da3. a4 Ds आशिष्ये; D5 आशिष्टां; T1 आसिष्यस् (for °ष्ये). V1 तं परो; D7 T2 तत्पुरो (for तत्परो). —$^{d}$) G2 इह (for सह). ❀ Cs : नित्यशः इत्यनेन दक्षशापस्यानवसरः प्रार्थितः । ❀

एवं मे भगवान्देवः स्वयमाख्यातवान्हरिः ।
आसिष्ये तत्परो भूत्वा युवाभ्यां सह नित्यशः ॥ ५२

इति श्रीमहाभारते शान्तिपर्वणि एकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१ ॥ ]

# [ ३३२

नरनारायणावूचतुः ।
धन्योऽस्यनुगृहीतोऽसि यत्ते दृष्टः स्वयं प्रभुः ।
न हि तं दृष्टवान्कश्चित्पद्मयोनिरपि स्वयम् ॥ १
अव्यक्तयोनिर्भगवान्दुर्दर्शः पुरुषोत्तमः ।
नारदैतद्धि ते सत्यं वचनं समुदाहृतम् ॥ २
नास्य भक्तैः प्रियतरो लोके कश्चन विद्यते ।
ततः स्वयं दर्शितवान्स्वमात्मानं द्विजोत्तम ॥ ३
तपो हि तप्यतस्तस्य यत्स्थानं परमात्मनः ।
न तत्संप्राप्नुते कश्चिदृते ह्यावां द्विजोत्तम ॥ ४
या हि सूर्यसहस्रस्य समस्तस्य भवेद्द्युतिः । C. 12. 13375 B. 12. 345[4]. 5 K. 12. 354. 5

---

Colophon. Ś1 D6 missing: K3.5 B1–5 Da1.a2 Dn2.n3 D1 G4.5 M2–4 absent. — *Sub-parvan:* K1.2.4.6.7 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D2–5.7–9 T1 G1.2.6 M1.5–7 मोक्षधर्म. — *Adhy. name:* K1.2.4.6 V1 B0.6–9 Da3.a4 Dn1 D8 D2.3.7.8 T2 G2 M5 नारायणीयं; K7 D4.5.9 नरनारायणीयं; T1 G6 नारायणीये नारदनारायणसंवादः; M1.6.7 नारायणीये नारदागमनं. — *Adhy. no.* (figures, words or both): K6 69; B7 Dn4 167; B8 266; B8 (also) 273; Dn1 G1 169; Ds1 M1.7 166; Ds2 T1 G6 170; D8 164; T2 183; G2 199; G3 171; M5 201; M6 160. — *Śloka no.:* Dn1.n4 67; D8 66.

## 332

☞ This adhy. is missing in Ś1 D6 (cf. v. l. 12. 329. 18; 283. 15).

1 K1.7 D4.9 नारायण उवाच; D7 T2 M1 नारायणावूचतुः (for नरनारायणा°). — a) K7 धन्यस्त्व; Da4 D7 T2 G2.3 धन्योस्मि (for धन्योऽसि). K2.4 Da4 D7 T2 G2 [ऽ]स्मि (for ऽसि). — b) Da3.a4 यस्ते. B7 lacuna; G2 त्वया (for स्वयं). D5 M1.6.7 भुवः; D7 भुवा (for प्रभुः). — $1^{cd}$ is damaged in B6. — d) K6 B7.9 Da3.a4 D5 ऋते ह्यावां (K6 त्वां वा) द्विजोत्तम.

2 $2^{ab}$ is damaged in B6. — a) D5 M1.5–7 C8 (gloss: आकाशादिसमस्तजगद्धेतुः) आकाशयोनिर् (for अव्यक्त°). — b) K1 (*sup. lin.* as in text).2 सुदर्शः; K6 Da4 दुर्दर्श-; Ds1 G2 दुर्दशः (for °र्शः). T2 पुरुषोत्तम. D5 ददृशे पुरुषोत्तमं. — c) G1 transp. ते and सत्यं. K4.6 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 Kumbh. ed. नौ (for ते).

3 a) D7 T G2.3.6 नास्ति (for नास्य). K1 B0 भक्तः; K4.6 V1 B6–9 Da3.a4 Dn1.n4 D8 D2.3.7.8 T G1–3.6 Kumbh. ed. भक्तात् (for भक्तैः). D5 नास्ति भक्त्या प्रियतमं. — b) D7 T2 लोकः (for लोके). K2 D5 कश्चिन्न (for कश्चन). — c) Ds1 यतः; M5 अतः (for ततः). — d) K7 V1 D4.5.9 M1.5–7 तवात्मानं; D7 T G1–3.6 तदा° (for स्वमा°). D5 T2 द्विजोत्तमः.

4 D7 repeats $4^{ab}$ after 4. — a) Da4 तपतस् (for तप्यतस्). D7 (both times) तपो हि तस्य तप्तस्य; G2 तपोभिस्तदवाप्तव्यं. — b) G2 स्थानं तस्य परात्मनः. — c) K2 D8 स्वं; G1 सत् (for सं-). G1 M1.7 -प्राप्नुयात् (for -प्राप्नुते). D7 T2 G3 न (D7 स) तस्य प्राप्नुयात्किंचिद्; T1 G3.6 न तत्समाप्नुयात्किंचिद्. — d) K6 त्वावां; B8 तत्वाद्; D4 यावां (sic) (for ह्यावां). Ds1 ऋते वां द्विजसत्तम.

5 a) D7 T2 याभिः (for या हि). — b) K2 समास्तस्य; D7 समं तस्य; T2 समुतस्य (sic) (for समस्तस्य). — c) B8 दैवस्य (for स्थानस्य). Dn1 D7 T2

C.12.13375 B.12.345(4).5 K.12.354.5 स्थानस्य सा भवेत्तस्य स्वयं तेन विराजता ॥ ५
तस्मादुत्तिष्ठते विप्र देवाद्विश्वभुवः पतेः ।
क्षमा क्षमावतां श्रेष्ठ यया भूमिस्तु युज्यते ॥ ६
तस्माच्चोत्तिष्ठते देवात्सर्वभूतहितो रसः ।
आपो येन हि युज्यन्ते द्रवत्वं प्राप्नुवन्ति च ॥ ७
तस्मादेव समुद्भूतं तेजो रूपगुणात्मकम् ।
येन स युज्यते सूर्यस्ततो लोकान्विराजते ॥ ८
तस्माद्देवात्समुद्भूतः स्पर्शस्तु पुरुषोत्तमात् ।
येन स युज्यते वायुस्ततो लोकान्विवात्यसौ ॥ ९
तस्माच्चोत्तिष्ठते शब्दः सर्वलोकेश्वरात्प्रभोः ।
आकाशं युज्यते येन ततस्तिष्ठत्यसंवृतम् ॥ १०
तस्माच्चोत्तिष्ठते देवात्सर्वभूतगतं मनः ।
चन्द्रमा येन संयुक्तः प्रकाशगुणधारणः ॥ ११
षड्भूतोत्पादकं नाम तत्स्थानं वेदसंज्ञितम् ।
विद्यासहायो यत्रास्ते भगवान्हव्यकव्यभुक् ॥ १२
ये हि निष्कल्मषा लोके पुण्यपापविवर्जिताः ।

---

G2 [अ]भवत् (for भवेत्). G2 तच्च (for तस्य). V1 सा भवेत्तस्य तस्य देशस्य (hypermetric). —d) K6 तस्य (for तेन). K2 विराजतः; D7 T G1.3.6 M5 C8 (gloss : विवर्धिता) विराजिता (for °जता).

6 b) K2 विश्वभवः; M1.5–7 विश्वं भुवः. B0 Da4 D5.7 पते (for पतेः). K6 वेदा द्विजभुवः प्रभोः; T2 ***शं भुवः पते; G2 देवाश्च जगतः पते. —c) B7 M1.6.7 क्षमाः; Cv (gloss : सहनशक्तिः) क्षमा (as in text). —d) K6 मया; T2 G2 यं यं (for यया). K1 स्म; K2 स; K7 D4.5.7.9 प्र- (for तु). G2 उच्यते (for युज्यते).

7 a) V1 Dn4 D5.7 T G2.3.6 उत्तिष्ठते (for चोत्ति°). K1 om. from ते देवा up to तेजो (in $8^{b}$). K2 विप्र; K6 देवा; K7 देवान् (for देवात्). —b) K2 D5 -गतो; B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 Kumbh. ed. -हिताद् (for -हितो). K6 सर्वभूता हितेद्रसः (sic); V1 D7 T1 G2.3.6 °भूतहिते रताः (D7 °तः; G2 °तात्). —c) D7 अहो (for आपो). B6 D8 हि येन (by transp.); Dn1.n4 D2.8 Kumbh. ed. हि तेन; G2 येन*. K2.4 समं युक्ता; K7 D4.9 स संयुक्ता; G2 lacuna (for हि युज्यन्ते). —d) D7 G2 द्रतत्वं; T2 वृतत्वं (for द्रवत्वं). D7 हि (for च).

8 K1 om. up to तेजो (cf. v. l. 7). Da4 om. 8. —a) K4.7 V1 D3–5.9 देवात्; B7 एवं (for एव). — K1 repeats $8^{bcd}$ after $9^{a}$. —b) D7 T2 तैज- (for तेजो). K7 Dn4 D4.9 G1 रूपं; B6.7.9 Da3 भूत-; M1.5–7 ज्योतिर्- (for रूप-). G1 -गुणान्वितं (for -गुणात्मकम्). K6 तेजो भूतगुणात्मिकं. —c) K1 (both times).2 ये नः (for येन). K1 (both times).2 स; K6 V1 B0.6–9 Da3 Dn1.n4 D8 D2.3.8 T1 G3.6 सं- (for स). —d) D7 T1 G1–3 तेन (for ततो). K4.6 V1 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 G2 लोके (for लोकान्). K1 (both times) व्यराजयं; K2 व्यराजत; K7 V1 D4.9 विराजयेत् (for °जते). D5 तपो लोका विराजयेत्; T2 तेन लोकादि राजते.

9 For the repetition in K1, cf. v. l. 8. —a) D7 T G1–3.6 M1.5–7 एव (for देवात्). K2 स संभूतः; G2 समुद्भूतात् (for °द्भूतः). — K1 om. $9^{bcd}$. —b) G2 स्पर्शनात् (for स्पर्शस्तु). D7 T G1.3.6 M1.5–7 स्पर्शः पुरुषसत्तमात्. —c) K2 ते नः; K4 तेन (for येन). K2.4 स; B6 सं-; D5 तं; G2 lacuna (for स). D5 om. (hapl.) from वायु up to युज्यते (in $10^{c}$). —d) D7 T G1–3.6 तेन (for ततो). K2.4 अयं (for असौ).

10 D5 om. up to युज्यते (cf. v. l. 9). —a) V1 D7 T G1–3.6 M1.5–7 उत्तिष्ठते (for चोत्ति°). —b) G1 सत्य- (for सर्व-). K7 D4.9 -भूतेश्वरात् (for -लोके°). K1.7 D7 T2 G2.3 प्रभो (for प्रभोः). — T1 om. $10^{cd}$. —c) D7 T2 आकाशे; G2.3.6 °शो (for °शं). —d) K2 संवृतं; K6 असंशयः; K7 संभृतं; B6.7.9 Da3.a4 D5 असंशयं; G1.3.6 °वृतः (for °वृतम्).

11 a) K6 B6–9 Da3.a4 D5 M1.5–7 विश्वं; G1.2 देवः (for देवात्). —b) D4 सार्कं- (for सर्व-). M1.5–7 -लोक- (for -भूत-). D7 T2 G2 -गतात्मनः (for -गतं मनः). —c) K1 संयुक्ता; T2 °क्तं (for °क्तः). —d) K1.2.6 V1 B0.7.9 Da3 D8 M7 आकाश-; D5 त्वाकाश- (for प्र°). K2.4 -वारणः; B8 (marg.) -कारणं; D81 M1.5–7 -धारकः (for -धारणः).

12 a) K6 B0.6 (orig.).7.9 Dn1.n4 D3.8 Kumbh. ed. सद्-; K7 V1 B6 (marg.).8 D4.5.9 यद्-; D2 T1 G1.3.6 तद्- (for षड्-). K2 -भूतोत्पातकं; B6.7 T1 G1.3.6 -भूतोत्पादनं (for °त्पादकं). K7 D4.9 धाम (for नाम). ❀ Ca : षड्भूतानि, मनसा सह । ❀ —b)

तेषां वै क्षेममध्वानं गच्छतां द्विजसत्तम ।
सर्वलोकतमोहन्ता आदित्यो द्वारमुच्यते ॥ १३
आदित्यदग्धसर्वाङ्गा अदृश्याः केनचित्क्वचित् ।
परमाणुभूता भूत्वा तु तं देवं प्रविशन्त्युत ॥ १४
तस्मादपि विनिर्मुक्ता अनिरुद्धतनौ स्थिताः ।
मनोभूतास्ततो भूयः प्रद्युम्नं प्रविशन्त्युत ॥ १५
प्रद्युम्नाच्चापि निर्मुक्ता जीवं संकर्षणं तथा ।
विशन्ति विप्रप्रवराः सांख्या भागवतैः सह ॥ १६
ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।
प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकम् ।
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ॥ १७
समाहितमनस्काश्च नियताः संयतेन्द्रियाः ।
एकान्तभावोपगता वासुदेवं विशन्ति ते ॥ १८
आवामपि च धर्मस्य गृहे जातौ द्विजोत्तम । C. 12. 13390 B. 12. 345(4).20 K. 12. 354. 20

K1.2.4.7 D4.9 T2 G1.2 देव- (for वेद-). K7 D9 -संज्ञकं; D7 -संज्ञितः (for °तम्). — c) ❀ Cs: विद्यासहायः, प्रकृतिसहायः । प्रकृतिरपि विपरीतलक्षणया विद्येत्युच्यते । ❀ — d) ❀ Cs: भगवान्, अनिरुद्धः । ❀

13 a) K7 D4.5.9 T1 G1-3.6 तु; D7 T2 [ऽ]ति- (for हि). K6 B0.6-9 Da3.a4 Dn1.n4 D2.3.8 निष्कलुषा (Da4 °षो) (for °ल्मषा). — b) Ds1 T2 -विवर्जितः. — c) K1 ते; T2 lacuna; G2 च (for वै). D5.7 मोक्षम् (for क्षेमम्). K2 तेषां तं क्षिप्यमानानां. — d) D5.7 गच्छतो (for °तां). G2 द्विजसत्तमात्. — e) K7 Da3 Dn4 Ds1 D2.3.8 Kumbh. ed. सर्वेलोके (for °लोक-). K2.4 -तमोहर्ता (for °हन्ता). — f) K2 आद्विभ्यो (sic); Da4 आदित्या (for °त्यो). K6 B0 Ds1 D2.3.8 G2 द्वार (for द्वारम्). — After 13, V1 B6.8 D7 T G1-3.6 M1.5-7 Kumbh. ed. ins.:

889* ज्वालामाली महातेजा येनेदं धार्यते जगत् ।

14 a) M1.5-7 -दंड- (for -दग्ध-). K1.2.4 -सर्वांगान्; K6 -सर्वांगो; T1 G3.6 -कायाश्च; T2 G1 -सांगाश्च; G2 -गात्राश्च (for -सर्वाङ्गा). Da4 आदित्या सर्वदग्धांगा. ❀ Ca: आदित्यदग्धसर्वाङ्गाः, आदित्यतेजसा क्षपितसकलदेहारम्भकभूतचयाः, पावकशोधितकनकवदमलाः । अत एव परमाणुभूताः । ❀ — b) T2 अवश्याः; G2 अपश्यं (for अदृश्याः). — c) Hypermetric. K7 D4.5.9 M1.5-7 परमात्म- (for °माणु-). K1 -भूतश् (for -भूता). K1.7 V1 B6.8.9 Da3.a4 D4.5.9 च परं (for भूत्वा तु). K2.4 परमाणु(K4 °ण)श्च देवाश्च; D7 T1 G1-3.6 °ण्वात्मभूतास्ते; T2 °ण्वात्मतस्ते तं. — d) K2.4 देशं; K6 देव (for देवं). K1 तं देशं तं देशंत्युत (sic); T2 देवं प्रति विशंत्युत.

15 K4 om. (hapl.) 15. — a) K1 एव; K2 देवश्; D5 देवाद् (for अपि). K6 B0.6-9 Da3.a4 Dn1.n4 Ds D2.3.8 Kumbh. ed. च (for वि-). K1 च निर्वृतो; K2 च निर्वृता (for विनिर्मुक्ता). — b) G2 अनुरुद्धतनौ. Da4 G2 स्थितः (for स्थिताः). ❀ Ca.p: अनिरुद्धतनौ, अहंकारे (Cp: अहंकारोपाधौ) । ❀ — c) D7 T2 मनोभूतस् (for °भूतास्). K6 B0.6-9 Da3.a4 Dn1.n4 Ds D2.3.5.8 M1.5-7 Kumbh. ed. भूत्वा (for भूयः). — d) K7 D4.5.9 ते (for [उ]त). ❀ Ca: प्रविशन्ति, अहमेवेति व्यवस्यन्ति । ❀

16 K7 repeats $16^{ab}$ after 18. — a) K1.2.4 D5 T1 G1.3.6 M1.5-7 च वि-; K7 (both times) D4.9 तु वि-; T2 वापि (for चापि). — b) K1 B8 जीव-; K7 (both times) D4.7.9 T G3.6 जीवाः; G2 जीवः (for जीवं). K2 संकार्षिणां; G2 °र्षणस्; G3 °र्षणास् (for °र्षणं). K6 B0.6-9 Da3.a4 Dn1.n4 Ds D2.3.8 M5.6 Kumbh. ed. ततः (for तथा). G1 जीवार्थं कर्षणं तथा; M1.7 जीवं संकर्षणंत्युत (sic). — c) B6.9 Da3.a4 विशंते (for °ति). K4 -प्रकराः (for °वराः). — d) Ds2 G2 सांख्य- (for सांख्या). D7 T G1-3.6 M1.5-7 योगाश्च (G2 °गाच्च) तैः (for भागवतैः). K2 सांख्यता भवतैः सह.

17 a) K1.2 B0 G3.6 तत्र (for ततस्). K2 त्रैगुंण्य- (for त्रैगुण्य-). — b) Da3.a4 आत्मना (for अञ्जसा). — c) K7 प्रविशति; T2 °शंत (for °शन्ति). K6 V1 B0.6-9 Da3.a4 Dn1.n4 Ds D2.3.5.7.8 T2 G1.2 Kumbh. ed. द्विजश्रेष्ठाः (for °श्रेष्ठ). — Da3.a4 om. (hapl.) $17^{de}$. — d) K6 क्षेत्रत्वं (for °ज्ञं). — e) M1.6.7 सर्वावासा (for °वासं). — f) T G1-3.6 बुद्धि- (for विद्धि). D5 क्षेत्रज्ञं विधिवत्ततः (sic).

18 a) G2 -मनस्काश्च. — b) D4 om. from यताः up to जातौ (in $19^{b}$). Da4 संयतेंद्रियः. — d) G2 च (for ते). — After 18, K7 repeats $16^{ab}$.

19 D4 om. up to जातौ (cf. v. l. 18). — a) K2 अयि (for अपि). — D5 om. $19^{b}$–$20^{a}$. — b) K1 जातो (for जातौ). G1 द्विजोत्तमौ. — c) K1.2

C. 12. 13390 B 12. 345(4).20 K 12. 354.20

रम्यां विशालमाश्रित्य तप उग्रं समास्थितौ ॥ १९

ये तु तस्यैव देवस्य प्रादुर्भावाः सुरप्रियाः ।

भविष्यन्ति त्रिलोकस्थास्तेषां स्वस्तीत्यतो द्विज ॥ २०

विधिना स्वेन युक्ताभ्यां यथापूर्वं द्विजोत्तम ।

आस्थिताभ्यां सर्वकृच्छ्रं व्रतं सम्यक्तदुत्तमम् ॥ २१

आवाभ्यामपि दृष्टस्त्वं श्वेतद्वीपे तपोधन ।

समागतो भगवता संजल्पं कृतवान्यथा ॥ २२

सर्वं हि नौ संविदितं त्रैलोक्ये सचराचरे ।

यद्भविष्यति वृत्तं वा वर्तते वा शुभाशुभम् ॥ २३

वैशंपायन उवाच ।

एतच्छ्रुत्वा तयोर्वाक्यं तपस्युग्रेऽभ्यवर्तत ।

नारदः प्राञ्जलिर्भूत्वा नारायणपरायणः ॥ २४

जजाप विधिवन्मन्त्रान्नारायणगतान्बहून् ।

दिव्यं वर्षसहस्रं हि नरनारायणाश्रमे ॥ २५

अवसत्स महातेजा नारदो भगवानृषिः ।

तमेवाभ्यर्चयन्देवं नरनारायणौ च तौ ॥ २६

इति श्रीमहाभारते शान्तिपर्वणि द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३२ ॥ ]

---

रम्यं विलासमाश्रित्य. — d ) K2.4 समाहितौ; B8 °श्रितौ; G2 °हितं (for °स्थितौ).

20 D5 om. 20a (cf. v. l. 19). — a ) K2 यत्ते; V1 B8 ये च (for ये तु). D7 ते सैव; T2 तेनैव (for तस्यैव). K2 वेदस्य (for देवस्य). — b ) K1.2 प्रादुर्भूताः; Ds1 G2 °र्भावः. Ds1 D5 G2 सुरप्रियः. — c ) Da4 D7 T2 भविष्यति. K1.2.7 V1 D4.5.9 त्रिलोकार्थं; M1.7 त्रिषु लोकस्थास् (hypermetric) (for त्रिलोकस्थास्). — d ) K4.6 Bo.6 Da3.a4 Dn1.n4 Ds D2.3.7.8 T G1.3.6 Kumbh. ed. स्वस्तीत्यथो (Ds2 °थो; T2 °यो) (for स्वस्तीत्यतो). G2 नैषां स्वस्त्ययनो द्विजः. ❀ Cs: स्वस्तीतिशब्दो हेतुवचनः, स्वस्त्यर्थमित्यर्थः । ❀ — After 20, M1.5–7 ins. 890*.

21 M1.5–7 om. 21. K4 om. 21ab. — a ) K1.2.6 युक्तानां; Da3.a4 मुक्ताभ्यां (for यु°). — b ) K1.2.6.7 B9 Da3 D4.5.7.9 T2 G1.2 तथा पूर्वं (for यथापूर्वं). — K7 D4.9 om. 21cd. — c ) Dn4 धर्मकालं; Ds सर्वकालं; D5.7 महाकृच्छ्रं (D7 °च्छ्र-); T G1–3.6 सर्वकृच्छ्र- (for °कृच्छ्रं). — d ) K1.2.4 तदुक्तवान्; V1 Bo.8 Dn1.n4 Ds D2.3.8 अनुत्तमं (for तदुत्तमम्). — D7 T G2.3.6 Kumbh. ed. ins. after 21: M1.5–7 after 20:

890* स्वार्थेन विधिना युक्तः सर्वकृच्छ्रव्रते स्थितः ।

22 a ) B8 च (for त्वं). — b ) K4 -द्वीपं (for -द्वीपे). K1.2.4 D9 द्विजोत्तम (for तपोधन). — c ) B8 समागतौ; Da4 °गते; M6 °गमे (for °गतो). — d ) K1.2.4 Dn1.n4 Ds1 D2.4.8 G3 Kumbh. ed. संकल्पं; D5 संकल्पान्; G1 स जल्पं (for संजल्पं) Dn1.n4 Ds D2.3.8 Kumbh. ed. तथा (for यथा).

23 a ) K1 तौ (for नौ). Da3.a4 सर्वं हि नाप्यविदितं; D5 सर्वं हितार्थं विदितं; D7 T G1–3.6 सर्वं हि ते सुवि°. — b ) K2 त्रैलोके. D7 त्रैलोक्यं सचराचरं. — c ) G2 च व्रतं (for वृत्तं वा). — d ) K7 B8 (marg. as in text) D4.9 च (for वा). K4 वर्तते नाशुभाशुभं; M1.6.7 °ते चाशुभाशुभं. — After 23, K6 V1 Bo.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.8 Kumbh. ed. ins.:

891* सर्वं स ते कथितवान्देवदेवो महामुने ।

[ B6 om. सर्वं. V1 महामते (for °मुने). ]

24 K1.2.7 D4.7.9 T G1–3.6 M1.6.7 om. the ref. — a ) K7 D4.5.9 ततो (for तयोर्). — b ) K7 [ऽ]भ्यवर्ततः; Bo Dn1.n4 Ds1 D3.8 च वर्तते; B7 [ऽ]भ्यवर्ततोः; B8 Ds2 D2 Kumbh. ed. च वर्ततोः; Da3.a4 स्म वर्तत (Da4 °ते); D7 T G3.6 व्रते स्थितः; G1 भूते स्थितः; G2 M1.5–7 व्यवस्थितः (for ऽभ्यवर्तत). — d ) G1 -परायणं.

25 a ) V1 विधिना; M1.6.7 विविधान् (for विधिवन्). — b ) K7 D4.7.9 T G1–3.6 M1.5–7 -परान् (for -गतान्). — c ) K1.2.4.7 D4.5.9 च (for हि).

26 a ) K1.2.4 सु- (for स). — c ) Ds अभ्यर्चयद् (for °र्चयन्). K7 D4.5.7.9 T G1–3.6 Kumbh.

# [ ३३३ ]

वैशंपायन उवाच ।

कस्यचित्त्वथ कालस्य नारदः परमेष्ठिजः ।
दैवं कृत्वा यथान्यायं पित्र्यं चक्रे ततः परम् ॥ १
ततस्तं वचनं प्राह ज्येष्ठो धर्मात्मजः प्रभुः ।
क इज्यते द्विजश्रेष्ठ दैवे पित्र्ये च कल्पिते ॥ २
त्वया मतिमतां श्रेष्ठ तन्मे शंस यथागमम् ।
किमेतत्क्रियते कर्म फलं चास्य किमिष्यते ॥ ३

नारद उवाच ।

त्वयैतत्कथितं पूर्वं दैवं कर्तव्यमित्यपि ।
दैवतं च परो यज्ञः परमात्मा सनातनः ॥ ४
ततस्तद्भावितो नित्यं यजे वैकुण्ठमव्ययम् ।
तस्माच्च प्रसूतः पूर्वं ब्रह्मा लोकपितामहः ॥ ५
मम वै पितरं प्रीतः परमेष्ठ्यप्यजीजनत् ।
अहं संकल्पजस्तस्य पुत्रः प्रथमकल्पितः ॥ ६ C. 12. 134(4 B. 12. 346[5]. 6 K. 12. 355. 6

ed तावेवाभ्यर्चयन्देवौ. — d ) K7 D4.5.9 G2 ऋषी; D7 T G1.3.6 उभौ ( for च तौ ).

Colophon. Ś1 D6 missing: K3.5 B1–5 Da1.a2 Dn2.n3 D1 G4.5 M2–4 absent. — *Sub-parvan:* K1.2.4.6.7 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2–5.7–9 T1 G1–3.6 M1.5–7 मोक्षधर्म. — *Adhy. name:* K1.2.4.6 V1 B0.6–9 Da3.a4 Dn1 Ds1 D2.3.8 T G2 नारायणीयं; K7 D4.5.9 नरनारायणीयं; M1.5–7 नारायणीये नारदतपश्चरणं. — *Adhy. no.* (figures, words or both): K6 70; B7 169; B8 274; Dn1 170; Dn4 168; Ds2 T1 G6 171; D8 165; T2 184; G2 200; G3 172; M1.6.7 167; M5 202. — *Śloka no.:* Da4 26; Dn1 27; Dn4 D8 28.

## 333

☞ This adhy. is missing in Ś1 D6 ( cf. v. l. 12. 329. 18; 283. 15 ).

1 M1.6.7 om. the ref. — a ) K1 कथंचित् ( for कस्य° ). — b ) T2 नारदं ( for °दः ). Dn4 D5.8 पा- ( Dn4 D8 प )रमेष्ठिनः. — c ) D4 दिवं ( for दैवं ). D3 चक्रे ( for कृत्वा ). K1 यथा न्यायं; T1 G3.6 स्वयं कर्मा ( for यथान्यायं ). ❀ Ca: दैवं, देवतर्पणादि । ❀ — d ) Dn4 पित्रे ( for पित्र्यं ). G2 चैव; M1 त्वग्रे ( for चक्रे ).

2 a ) Dn4 तातस् ( for ततस् ). — b ) D7 T2 M7 धर्मात्मजं ( for °त्मजः ). Da3 om. प्रभुः. ❀ Cp: ज्येष्ठो धर्मात्मजः नारायण एव । ❀ — c ) D7 T1 G1–3.6 M1.5–7 -वर; T2 -वरं ( for -श्रेष्ठ ). — d ) T2 देव-; G2 देवे ( for दैवे ). Dn4 पित्रे; D4 पैत्र्ये ( for पित्र्ये ). D5 कल्पितः ( for °ते ).

3 b ) T2 यन्मे; G2 यत्ते ( for तन्मे ). B0.7 Dn4 संश ( for शंस ). D7 T G1–3.6 M1.5–7 Kumbh. ed. यथातथं ( for °गमम् ). K1.2.4.7 V1 D4.5.9 तन्मे व्याख्यातुमर्हसि. — 3cd is damaged in B6. — c ) K6 धर्म- ( for कर्म ). G2 क्रियते क्रियते चैव. — d ) K1.4 Dn1.n4 D8 D2.3.8 M1.5–7 Kumbh. ed. वास्य; K7 वात्र; D4.5.9 चात्र ( for चास्य ).

4 a ) D4.7.9 T G2.3.6 एव; D5 एवं ( for एतत् ). Dn4 कल्पितं ( for कथितं ). D5 सर्व- ( for पूर्वं ). — b ) Da3 G1 देवं; D4 दैव-; G2 देव- ( for दैवं ). K7 D4.9 इष्यते ( for इत्यपि ). Da4 ब्रह्मा लोकपितामहः. — c ) K2 D7 G1 M1.5–7 Kumbh. ed. ज्ञेयः ( for यज्ञः ). D5 दैवं च परमो यज्ञः; T1 G3.6 दै( T1 दे )वश्च परमो ज्ञेयः; T2 G2 दैवतश्च परो ज्ञेयः. — d ) D5.7 परमो यः ( for परमात्मा ). D8 परमेष्ठ्यप्यजीजनत् ( = 6b ).

5 a ) ❀ Cp: भावितः, प्रेम्णा वशीकृतः । ❀ — b ) K2 M1.6.7 यजेद्; Da3.a4 D5 यज्ञे ( for यजे ). — c ) K2 T2 M1.7 प्रसुतं; G2 प्रहृतः; Cv ( gloss: प्रकर्षेण उदरे धारितः ) प्रघृतः ( for प्रसूतः ). B8 तस्मात्प्रसूतः पूर्वं वै. — d ) Dn4 T2 -पितामह-.

6 a ) K1.2.4 ममैष; K7 D4.9 मामेव; D7 G2 तमेव; T1 ममैवं; T2 G1.3.6 ममैव ( for मम वै ). Da4 पितर-; T1 परमं; G2.3.6 परम- ( for पितरं ). M1.6.7 प्रीतं ( for प्रीतः ). — b ) K7 D4.9 ह्यजीजनत्; V1 B8 ( marg. as in text ) अजी°; G2.6 त्वजी° ( for [अ]प्यजी° ). K1.2 T2 परमेष्ठिमजीजनत्; Da4 °मेष्ठ्यस्यजीजनत्; D7 T1 G1.3 प( D7 पा )रमेष्ठीमजीजनत्; M1.5–7 पितामहमजीजनत्. — c ) K2 सत्कल्पजस्; B0

C. 12. 13405
B. 12. 346[5]. 7
K. 12. 355. 7

यजाम्यहं पितॄन्साधो नारायणविधौ कृते ।
एवं स एव भगवान्पिता माता पितामहः ।
इज्यते पितृयज्ञेषु मया नित्यं जगत्पतिः ॥ ७
श्रुतिश्चाप्यपरा देव पुत्रान्हि पितरोऽयजन् ।
वेदश्रुतिः प्रणष्टा च पुनरध्यापिता सुतैः ।
ततस्ते मन्त्रदाः पुत्राः पितृत्वमुपपेदिरे ॥ ८
नूनं पुरैतद्विदितं युवयोर्भावितात्मनोः ।
पुत्राश्च पितरश्चैव परस्परमपूजयन् ॥ ९
त्रीन्पिण्डान्न्यस्य वै पृथ्व्यां पूर्वं दत्त्वा कुशानिति ।
कथं तु पिण्डसंज्ञां ते पितरो लेभिरे पुरा ॥ १०

नरनारायणावूचतुः ।

इमां हि धरणीं पूर्वं नष्टां सागरमेखलाम् ।
गोविन्द उज्जहाराशु वाराहं रूपमाश्रितः ॥ ११
स्थापयित्वा तु धरणीं स्वे स्थाने पुरुषोत्तमः ।
जलकर्दमलिप्ताङ्गो लोककार्यार्थमुद्यतः ॥ १२
प्राप्ते चाह्निककाले स मध्यंदिनगते रवौ ।

---

संकल्पयस्; M1 °ल्पिजस् (for °ल्पजस्). ❀ Cv: तस्य, नारायणस्य । ❀ — d) B6 damaged. K1.2.7 D9 -कल्पिकः (K2 °काः) (for °तः).

7 a) K6 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.5.8 M1.5–7 Kumbh. ed. वै (for [अ]हं). G2 अतः (for पितॄन्). K7 साधौ; V1 कृत्स्नो. — b) G2 कृतौ (for कृते). ❀ Cn: नारायणविधौ, तान्त्रिके पूजादौ ॥ Cp: नारायणविधौ, नारायणज्ञाननिमित्तम् । नारायण इति संबोधनं वा ॥ Cs: नारायणविधौ कृते, नारायणाराधने विहिते कृते सति । ❀ — d) Dn4 पिता मातामहश्च ये. — e) K2 यज्यते; D7 G2 इष्येते (for इज्यते). — f) K4 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 तथा; K6 यथा; G2 याज्या (for मया). T2 जगत्पतिं.

8 a) M1.6.7 अक्षरा (for अपरा). K4.6 V1 B0.6–9 Da3.a4 Dn1 D8 D2.3.8 देवी; Dn4 देवः; D4.5.7 T G1.3.6 Cs Kumbh. ed. देवाः (for देव). G2 श्रुतयश्च परा देव. — b) D5 पुत्रं; D7 पुत्रो; T2 G2 पुत्रा (for पुत्रान्). K6 om. हि. Ds2 पितरौ; Ca (gloss: मन्त्रं दत्त्वा पितृत्वमापन्नान्) पितरो (as in text). T2 [s]यजत्. Dn4 पुत्राद्धि पितरो यतः. — c) K6.7 D4.9 वेदश्रुति- (D9 °तिं); B7 वेदः श्रुति-; T2 G2 देवश्रुतिः (G2 °ति-) (for वेद°). K1.7 B0.7–9 Da3.a4 Dn1.n4 Ds1 D2.3.5.8 G1 M1.5–7 प्रनष्टा; V1 प्रनष्टाश्; D4.9 प्रनष्टां; G2 प्रणाशे (for प्रणष्टा). — d) K4 अध्यापिता; D4.9 G1–3.6 अध्यापिताः. D5 श्रुते (for सुतैः). — e) B8 मंत्राः (for मन्त्रदाः). T2 ततस्तेमं तदा पुत्राः. — f) K2.4 पिता त्वम् (for पितृत्वम्). V1 B3 (marg. as in text) प्रति-; D8 अभि- (for उप-). D7 T G1–3.6 M1.5–7 Kumbh. ed. पितॄणामिति (G2 °मपि) वैदिकं.

9 K7 om. 9. — a) K2 परैतद्; B0 नरैस्तद्; B8 (marg. as in text) पुत्रैस्तद्; B9 पुरे तद्; Da4 पुरैस्तद्; Dn1.n4 D8 D2.8 Kumbh. ed. सुरैस्तद्; D4.9 पुरैव (for पुरैतद्). K2 विधितं; D4 विदिता (for °तं). — c) V1 प्रजाश्च (for पुत्राश्च). — d) K2 परंपारम् (for परस्परम्).

10 a) M1.6.7 पृथ्व्याः; Kumbh. ed. पित्र्यान् (for पृथ्व्यां). K1.2 त्रीन्पिडान्व्युप्य पृथ्व्यां. — b) K6 पूर्वा; K7 Da3.a4 पूर्वे-; D4 पूर्वे (for पूर्वं). K7 कुशाविह; B8 कुशासनं; D4.5.7.9 °निह; G2 कुशांतिके (for कुशानिति). — c) K2 B8 D3–5 M1.6.7 नु (for तु). K1.2.7 Ds1 -संज्ञाते; D5 -संज्ञेति; M1.6.7 -संज्ञां तु (for -संज्ञां ते). — d) K1.2.4 V1 D4.5.9 तदा; D7 T G1.3.6 पुनः (for पुरा). K7 G2 लेभिरे पितरस्तदा (G2 °तः).

11 K4 श्रीनरनारद उवाच (for नरनारायणावूचतुः). — a) Dn4 इमं (for इमां). Da3 ह (for हि). K1 पूर्वां; B6 (marg.) पूर्वे- (for पूर्वं). — b) T1 -मेघलां (for -मेखलाम्). Dn4 नष्टां सागरमंभसि. — d) K2 वराहं; B7 D4 वाराह- (for °हं). K2 आश्रिताः; T2 °तां (for °तः).

12 a) K1.2.4.7 D4.5.9 च (for तु). K1 Dn4 धरणी. — b) D7 T G1–3.6 M1.5–7 स्व- (for स्वे). Da4 T2 पुरुषोत्तम. — c) Ds1 -लिप्तांगैर् (for -लिप्ताङ्गो). K2 जलकंदसलिप्तांगे. — d) T2 लोककार्याविपद्यतः.

13 a) K2.4 च वह्नि- (for चाह्निक-). K2 V1 B8 च; K6 B0.6.7.9 Da3.a4 Dn1.n4 D8 D2.3.8 Kumbh. ed. तु; T2 न (for स). D5.7 संप्राप्ते चाह्निके काले. — b) K6 B0.6–9 Da3.a4 Dn1.n4 D8 D2.3.8 M1.5–7 Kumbh. ed. मध्यदेश- (for मध्यंदिन-). — c) M1.7 दंष्ट्रान्. K6 V1 B0.6–9 Da3.a4 Dn1 D8 D2.3.5.7.8 M1.6.7 Kumbh. ed. त्रीन् (for मृत्-). K1.2.4 दंष्ट्रा (K1 दंष्ट्रा) निमग्नं (K4 विलग्नं) मृत्पिंडं. — d) M7 विधाय (for विधूय). V1 स महा- (for सहसा). K2

दंष्ट्राविलग्नान्मृत्पिण्डान्विधूय सहसा प्रभुः ।
स्थापयामास वै पृथ्व्यां कुशानास्तीर्य नारद ॥ १३
स तेष्वात्मानमुद्दिश्य पित्र्यं चक्रे यथाविधि ।
संकल्पयित्वा त्रीन्पिण्डान्स्वेनैव विधिना प्रभुः ॥ १४
आत्मगात्रोष्मसंभूतैः स्नेहगर्भैस्तिलैरपि ।
प्रोक्ष्यापवर्गं देवेशः प्राङ्मुखः कृतवान्स्वयम् ॥ १५
मर्यादास्थापनार्थं च ततो वचनमुक्तवान् ।
अहं हि पितरः स्रष्टुमुद्यतो लोककृत्स्वयम् ॥ १६
तस्य चिन्तयतः सद्यः पितृकार्यविधिं परम् ।
दंष्ट्राभ्यां प्रविनिर्धूता ममैते दक्षिणां दिशम् ।
आश्रिता धरणीं पिण्डास्तस्मात्पितर एव ते ॥ १७
त्रयो मूर्तिविहीना वै पिण्डमूर्तिधरास्त्विमे ।
भवन्तु पितरो लोके मया सृष्टाः सनातनाः ॥ १८
पिता पितामहश्चैव तथैव प्रपितामहः ।
अहमेवात्र विज्ञेयस्त्रिषु पिण्डेषु संस्थितः ॥ १९
नास्ति मत्तोऽधिकः कश्चित्को वाभ्यर्च्यो मया स्वयम् ।
को वा मम पिता लोके अहमेव पितामहः ॥ २०
पितामहपिता चैव अहमेवात्र कारणम् । C. 12.13421 B. 12.346[5].23 K. 12.355.22

प्रभौ; K6 B3 G3 विभुः (for प्रभुः). — e) K6 Da3.a4 पृथ्व्यां स; K7 वै पृथ्वीं; T2 वै वृत्यां (for वै पृथ्व्यां). — f) K1.2.4 दर्भान्; D7 कुशाव्; T2 शुकाव् (for कुशान्). Dn4 T G3.6 नारदः.

14 a) K1.2 D4.9 तेष्वा( D4.9 तथा )त्मानं समुद्दिश्य; K7 स तथात्मानं समुद्दिश्य (hypermetric). — b) K1.2 पैत्र्यं; G2 पिंडं (for पित्र्यं). K1.7 यथा विधिः. ❀ Ca: मृत्पिण्डं दंष्ट्राग्रलग्नं प्रवृत्त्यात्मानमेव पितृत्वेन प्रकल्प्य लोकव्यवहारहेतोः । ❀ — c) K1.2.4 संकल्प्य तत्र; Ds1 D8 स कल्पयित्वा. K7 D4.9 मृत्- (for त्रीन्). — d) K1.2 तेन (for स्वेन). V1 विधिवत् (for विधिना).

15 a) K1.2 -धातोष्म-; D7 G1.2 -गात्रेषु; T1 G3.6 -गात्रोष्ण- (for -गात्रोष्म-). T2 -संभूते. — b) D4 lacuna; T2 G1 अपः (for अपि). — D4 om. 15c–16b. — c) K2 मोक्ष; Dn4 D8 प्रोक्ष (for प्रोक्ष्य). D5 [अ]हिवर्गं; D7 T1 G1.3.6 M1.5–7 [अ]पसव्यं; T2 [अ]पसर्वं; G2 [अ]पः सर्वं; Cp (gloss: पिण्डत्यागम्) [अ]पवर्गं (as in text).

16 D4 om. 16ab (cf. v. l. 15). — a) K1 B8 हि (for च). — b) Da3.a4 अब्रवीत् (for उक्तवान्). — Before 16cd, K6.7 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3.5.7–9 M5.6 editions ins. वृषाकपिरुवाच. — c) Cn.p (gloss [both]: पितॄन्) पितरः (as in text). K1.2.4 अहं विश्वपितॄन्द्रष्टुम् ( K2 °न्हष्ट्वा; K4 °न्स्रष्टुम् ); K7 V1 D4.5.9 अहं किल पितॄन्स्र( D4.9 °न्स्र-; D5 °न्य )ष्टुम्; D7 अहं हि वै पितॄन्यष्टुम्.

17 a) Dn4 यस्य (for तस्य). K6 सत्यः; D8 सम्यक्; T1 G2.3.6 त्वद्य (for सद्यः). — b) K6 B0.6.7 Da3.a4 Dn1 Ds D2.3.8 Kumbh. ed. -विधीन्प( B6 °न्व )रान्; B8 -विधीन्पुरा; B9 Dn4 -विधान्परान्; G2 -विधिं प्रति (for -विधिं परम्). — c) B3 पवि-; Ds2 प्रति- (for प्रवि-). T1 G3 -निर्धूतां (for -निर्धूता). — d) K6 T1 G1.3.6 मृत्पिंडान् ( K6 °द् ); K7 ममैतद्; B6.8 (marg.) Da3 D5.7 T2 M1.5–7 मृत्पिंडा (for ममैते). G1 मृत्पिंडादि तृणांतकं. — e) D7 आस्थिता (for आश्रिता). V1 प्राप्य; B0.6–9 Da3 D5.7 T1 G1.3.6 M1.5–7 Kumbh. ed. पीड्य; T2 पिड्या (for पिण्डास्). ❀ Cn: विष्णोः शालग्राम इव पितॄणां मूर्तयः पिण्डा एव । ❀ — f) ❀ Cv: तस्मात्, दक्षिणादिशि पतितत्वात् । ❀

18 ab) K7 D4 मूर्तिर् (for मूर्ति-). G2 नु (for वै). B0 पिंडान्; Ds D8 पिंडा (for पिण्ड-). K1.2.4.6 V1 B6.7.9 Da3.a4 D5 चत्वारस्तु समूर्तयः. ❀ Cv: मानुषैः पूज्यमानाः पितरः मानुषदृग्गोचरमूर्तिरहितत्वादमूर्ताः । देवैः पूज्यमानास्तु समूर्ता इत्युच्यन्ते । ❀ — c) T G3.6 भवंति (for भवन्तु). — d) K2 दृष्टाः (for सृष्टाः). Dn4 सनातनः.

19 a) K1 पितामहाश्च. — D7 om. (hapl.) 19b–21a. K7 om. (hapl.) 19c–20d. — d) T1 संज्ञितः (for संस्थितः).

20 K7 D7 om. 20 (cf. v. l. 19). — a) G2 तास्तु (for नास्ति). — b) K2 वाभ्यं*; K4.6 V1 B0.6–9 Da3.a4 Dn1.n4 Ds D2.3.8 Kumbh. ed. वान्योऽर्च्यो; G2 वा लोके (for वाभ्यर्च्यो). G2 महान् (for मया). T G1–3.6 M1.5.7 भवेत् (for स्वयम्). — c) T G1–3.6 M1.5–7 अहमेव (for को वा मम). G3 ह्येको (for लोके). — d) K1.2 को वा मम; K4 D9 G2 ह्यहमेव (for अह°).

C.12.13421 B.12.346[5].23 K.12.355.23 इत्येवमुक्त्वा वचनं देवदेवो वृषाकपिः ॥ २१
वराहपर्वते विप्र दत्त्वा पिण्डान्सविस्तरान् ।
आत्मानं पूजयित्वैव तत्रैवादर्शनं गतः ॥ २२
एतदर्थं शुभमते पितरः पिण्डसंज्ञिताः ।
लभन्ते सततं पूजां वृषाकपिवचो यथा ॥ २३
ये यजन्ति पितॄन्देवान्गुरूंश्चैवातिथींस्तथा ।
गाश्चैव द्विजमुख्यांश्च पृथिवीं मातरं तथा ।
कर्मणा मनसा वाचा विष्णुमेव यजन्ति ते ॥ २४
अन्तर्गतः स भगवान्सर्वसत्त्वशरीरगः ।
समः सर्वेषु भूतेषु ईश्वरः सुखदुःखयोः ।
महान्महात्मा सर्वात्मा नारायण इति श्रुतः ॥ २५

इति श्रीमहाभारते शान्तिपर्वणि त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३३ ॥ ]

21 D7 om. $21^{a}$ (cf. v. l. 19). — a) K1.2.4 पिता पितामहश्चैव. — b) Ds1 om. अहमेवा. — Before $21^{cd}$, B8 ins. नरनारायणावूचतुः. — c) K6 V1 B0.6.7.9 Da3, a4 Dn1, n4 Ds D2.3.8 Kumbh. ed. एतद् (for एवम्). K4 Da4 D9 उक्ता (for उक्त्वा).

22 a) V1 B6.9 Da3, a4 Dn4 Ds1 D2.5.7.8 वाराह-; D4.9 वराहः (for °ह-). K7 -पर्वतो (for °ते). — b) Dn4 हत्वा (for दत्त्वा). K1.2.4 सुविस्तरान्; B8 Da3 सविष्टरान्; D4.7 T G1.3.6 सविस्तरं (for °रान्). — c) B6 damaged. K1.2.4 दर्शयित्वा (for पूज°). K6.7 V1 B9 Da3 D4.5.9 T1 G1.3.6 [ए]वं; B8 च (for [ए]व).

23 a) D7 शुभवते (for °मते). K1.2.4.6 V1 B0.6–9 Da3, a4 Dn1, n4 Ds D2.3.5.8 एषा त( K6 °षाम )-स्य स्थितिर्विप्र ( Da3, a4 °प्रा ). — b) K1.2.4 -दर्शि( K2 °र्शं )नः; Ds1 -संज्ञितः. — c) K6 Da3, a4 लभते; D7 लभंत. K7 M7 पूजा. — d) G2 प्रजापति- (for वृषाकपि-). M1.7 -वयो (for -वचो).

24 D5 om. (hapl.) $24^{ab}$. — a) D7 T2 G1.2 M1.5–7 भक्त्या (for देवान्). T1 G3.6 ये यजंति गुरून्भक्त्या. — b) T1 G3.6 पितॄन् (for गुरूंश्). D7 T G1–3.6 M1.5–7 देवातिथींस् (for चैवा°). — c) K2 Da3, a4 गांश्. K6 M7 -मुख्याश्च; T2 -मुख्याद्य (for -मुख्यांश्च). — d) K2 पृथिवो; D7 T G1–3.6 M1.5–7 पितरं. B6 damaged; B7 Dn4 D2 यथा (for तथा). — $24^{ef}$ is partly damaged in B6. — f) K1 जयंति (for यजन्ति).

25 a) B5 damaged. K1.2 च (for स). — b) K7 D4.9 सर्वः सर्व- (for सर्वसत्त्व-). K2 -शरीरिणः; D9 -शरीरतः (for °रगः). — c) D9 स्पष्टः; M6 तमः (for समः). G2 om. भूतेषु. — d) K1.2.4 चेश्वरः (for ई°). D7 सम- (for सुख-). — e) M1.5–7 स वै (for महान्). K6 Da3 भूतात्मा; D5 सर्वस्य (for सर्वात्मा). K7 D4.9 महानात्मा स सर्वात्मा; M5 (*inf. lin.*) माहात्म्यभावात्सर्वात्मा. — f) K2 V1 स्मृतः; K7 B8 Da4 Ds1 D4.7.9 G1.3.6 M1.5–7 श्रुतिः (for श्रुतः).

Colophon. Ś1 D6 missing: K3.5 B1–5 Da1, a2 Dn2, n3 D1 G4.5 M2–4 absent. — *Sub-parvan:* K1.2.4.6.7 V1 B0.6.8.9 Da3, a4 Dn1, n4 Ds1 D2–5.7–9 T G1–3.6 M1.5–7 मोक्षधर्म. — *Adhy. name:* K1.2.4.6 V1 B0.6–9 Da3, a4 Dn1 Ds D2.3.5.8 T2 M5.6 नारायणीयं; K7 D4.9 नरनारायणीयं; T1 नारायणीयोपाख्याने नारदनारायणसंवादः; G6 नारायणीये नारदनारायणसंवादः; M1.7 नारायणीये पितृसर्गकथनं. — *Adhy. no.* (figures, words or both): K6 71; B7 Dn4 169; B8 275; Dn1 G1 171; Ds2 170; D8 166; T1 G6 172; T2 175; G2 201; G3 173; M1.7 168; M5.6 203. — *Śloka no.:* Da4 17; Dn1, n4 D8 28.

# [ ३३४ ]

वैशंपायन उवाच ।
श्रुत्वैतन्नारदो वाक्यं नरनारायणेरितम् ।
अत्यन्तभक्तिमान्देवे एकान्तित्वमुपेयिवान् ॥ १
प्रोष्य वर्षसहस्रं तु नरनारायणाश्रमे ।
श्रुत्वा भगवदाख्यानं दृष्ट्वा च हरिमव्ययम् ।
हिमवन्तं जगामाशु यत्रास्य स्वक आश्रमः ॥ २
तावपि ख्याततपसौ नरनारायणावृषी ।
तस्मिन्नेवाश्रमे रम्ये तेपतुस्तप उत्तमम् ॥ ३
त्वमप्यमितविक्रान्तः पाण्डवानां कुलोद्वहः ।
पावितात्माद्य संवृत्तः श्रुत्वेमामादितः कथाम् ॥ ४
नैव तस्य परो लोको नायं पार्थिवसत्तम ।
कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् ॥ ५
मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।
यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् ॥ ६
कथं नाम भवेद्द्वेष्य आत्मा लोकस्य कस्यचित् ।
आत्मा हि पुरुषव्याघ्र ज्ञेयो विष्णुरिति स्थितिः ॥ ७ C. 12. 13434 B. 12. 347[6]. 8 K. 12. 356. 7

## 334

☞ This adhy. is missing in Ś1 D6 (cf. v. l. 12. 329. 18; 283. 15).

1 G2 om. the ref. — a) D4. 9 श्रुत्वा तु; T1 G3. 6 श्रुत्वैवं (for °तन्). B0 नारदं (for °दो). — b) B0 नरनारायणीरितं. — Ds2 reads 1c–2b on marg. — c) B0 Dn1 Ds2 D3. 7 Kumbh. ed. अत्यंतं (for °त-). K2 -भगवान् (for -भक्तिमान्). K2 B6. 8. 9 Da3. a4 Dn4 D5. 7 T G1. 3. 6 M1. 5 देव (for देवे). — d) K3. 4 ऐकांतित्वम्; M7 एकांतत्वम्.

2 Ds2 reads 2ab on marg. — a) B8 तस्य (for प्रोष्य). Da4 वर्ग- (for वर्ष-). K6. 7 V1 B0. 6–9 Da3. a4 D4. 5. 9 च (for तु). D7 T G1–3. 6 M1. 5–7 Kumbh. ed. उषित्वा वर्षसाहस्रं. — c) K1. 2 सुमहद् (for भगवद्-). Dn4 -आस्थानं; D4 T2 -आख्यातं (for °नं). — d) K7 D4. 5. 9 दृष्ट्वा तु; M1. 6. 7 आ(M1 अ)पृष्ट्वा (for दृष्ट्वा च). Dn4 दृष्ट्वा चरितमव्ययं. — e) K7 D7. 9 T G1–3. 6 M1. 5–7 Kumbh. ed. जगाम हिमवत्कुक्षाव् (K7 °त्कक्षे; D9 °त्कुक्षे); V1 जगाम हिमवंतं च. — f) V1 यत्रास्ते; D5 यत्तस्य (for यत्रास्य). K6 शुक; B7 स्वकम्. K7 D9 T G1–3. 6 M1. 5–7 Kumbh. ed. आश्रमं स्वं (T1 G3. 6 स) सुरार्चितं; B8 (marg. as in text) आश्रमं स्वं पुरार्जितं; Ds1 यत्रास्य आश्रमस्तु कः; D7 °स्य स्वकमव्ययं.

3 a) K2 [आ]ख्यात- (for ख्यात-). T1 G1–3. 6 M1. 5–7 Kumbh. ed. -यशसौ (for -तपसौ). K7 D4. 9 तावपि ध्यानपरमौ; D7 T2 तावद्विख्यातयशसौ. — c) K1. 2 D5 शुभ्रे; T2 M1. 6. 7 पुण्ये (for रम्ये). — d) K1. 2 तेपाते (for तेपतुस्). Da4 तपम् (for तप). V1 M1. 6. 7 तपस्तेपतुरुत्तमं.

4 a) K6 त्वमसि (for °पि). K7 V1 T G1–3. 6 M1. 5–7 -विक्रांत. — b) B8 D4. 7 T2 G1. 2 M1. 5–7 कुलोद्वह (for °द्वहः). — c) K1. 2 पावितांगो; Dn4 पाठितात्मा (for पावि°). K6 [अ]थ; D7 हि (for [अ]द्य). B8 सद्वृत्तः; D7 [अ]संवृत्तः; G2 संयुक्तः (for संवृत्तः).

5 a) Da3 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. तस्या- परो (for तस्य परो). — b) K6 ह्ययं (for नायं). Da4 -सत्तमः; D8 -सत्तमं.

6 Ds2 om. 6ab. — a) M1. 7 मज्जंत (for °ति). — c) K1. 2 द्वेष्टि (for द्विष्याद्). K6 -श्रेष्ठ (for -श्रेष्ठं). — d) K7 देव- (for देवं). K1. 2. 4 विभुं; K7 हरं (for हरिम्). G2 नारायणमयं हरिं.

7 b) K1. 2. 4. 7 D4. 5. 9 लोकेष्वात्मा च (K1. 2. 4 तु); D7 आत्मलोकेषु; T G1–3. 6 आत्मा लोकेषु (for आत्मा लोकस्य). — c) K1. 2. 4 तु (for हि). — d) K6. 7 B8 (marg. as in text) D7 T G1. 3. 6 M1. 5–7 Kumbh. ed. श्रुतिः; G2 श्रुतः (for स्थितिः). B9 यो योत्रिरिति स्थितः (sic).

8 a) Da4 Ds1 D5 स (for य). B6 एव (for एष). — b) Dn4 ऋषी- (for ऋषिर्). — c) K7 D4. 9 [ए]व (for [ए]तद्). K1. 2. 4 D4. 5. 9 सम्यङ् (for तात). D7 तेनैतत्कथिताकारा. — d) K6 अव्ययं (for माहात्म्यं). K6 B0. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8

C. 12. 13434
B. 12. 347(6). 8
K. 12. 356. 8

य एष गुरुरस्माकमृषिर्गन्धवतीसुतः ।
तेनैतत्कथितं तात माहात्म्यं परमात्मनः ।
तस्माच्छ्रुतं मया चेदं कथितं च तवानघ ॥ ८
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुरुषव्याघ्र महाभारतकृद्भवेत् ।
धर्मान्नानाविधांश्चैव को ब्रूयात्तमृते प्रभुम् ॥ ९
वर्ततां ते महायज्ञो यथा संकल्पितस्त्वया ।
संकल्पिताश्वमेधस्त्वं श्रुतधर्मश्च तत्त्वतः ॥ १०
एतत्तु महदाख्यानं श्रुत्वा पारिक्षितो नृपः ।
ततो यज्ञसमाप्त्यर्थं क्रियाः सर्वाः समारभत् ॥ ११
नारायणीयमाख्यानमेतत्ते कथितं मया ।
नारदेन पुरा राजन्गुरवे मे निवेदितम् ।
ऋषीणां पाण्डवानां च शृण्वतोः कृष्णभीष्मयोः ॥ १२
स हि परमगुरुर्भुवनपति-
धरणिधरः शमनियमनिधिः ।
श्रुतिविनयनिधिर्द्विजपरमहित-

---

परमव्ययं (for °मात्मनः). — $^{c}$) $T_2$ $G_1$ अस्मात् (for त°). $K_6$ श्रुत्वा (for श्रुतं). $K_{1,2,4,7}$ $D_{4,5,9}$ तेद्य (for चेदं). — $^{f}$) $T_2$ $G_3$ मया (for तव). $T_2$ (also as in text) तव (for [अ]नघ). $K_{1,2,4}$ व्याख्यातुं ($K_2$ °नं) नृपसत्तम; $K_7$ $D_{4,5,9}$ व्या($K_7$ आ)ख्यातं नृप तेनघ; $G_3$ कथितं तव चानघ. — After 8, $K_6$ $V_1$ $B_{0,6-9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_s$ $D_{2,3,5,8}$ Kumbh. ed. read 12. 336. $50^{a}$–$51^{a}$ followed by 12. 336. $49^{bcd}$, for the first time, repeating the same in their proper places.

9 $^{b}$) $K_{1,2}$ $D_5$ मुनिं; $K_4$ $B_{0,6,7,8}$ (marg.)$_{,9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_{s1}$ $D_{2,3,8}$ भुवि; $V_1$ $D_{s1}$ विभुं; $T_1$ $G_{3,6}$ परं (for प्रभुम्). — $K_7$ om. (hapl.) $9^{cdef}$. $9^{cd}$ is partly damaged in $G_2$. — $^{e}$) $K_2$ पुरुषः; $K_4$ पुरुषे (for पुरुष-). $D_5$ -व्यास (for -व्याघ्र). $D_7$ T $G_{1,3,6}$ $M_{1,5-7}$ Kumbh. ed. को ह्यन्यः पुंडरीकाक्षान्. — $^{f}$) $D_5$ त्वामृते (for तमृते). $V_1$ विभुं; $D_7$ प्रभुः (for प्रभुम्).

10 $^{a}$) $D_{a4}$ महाप्राज्ञो (for °यज्ञो). $K_4$ वर्तते तु महायज्ञैर्. — $^{b}$) $D_7$ $T_1$ $G_{1,3,6}$ यतः; $G_2$ यस्तु (for यथा). — $^{c}$) $B_6$ damaged. — $^{d}$) $D_{n4}$ श्रुतं (for श्रुत-). $K_7$ $D_{4,9}$ $M_{1,5-7}$ Kumbh. ed. -धर्मा च; $D_7$ -धर्मस्य; $G_1$ -धर्मं च (for -धर्मश्च).

11 Before 11, $K_{1,2,4,7}$ $D_{4,5,7,9}$ T $G_{1,3,6}$ ins. सूत उवाच; $K_6$ $V_1$ $B_{0,6-9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_s$ $D_{2,3,8}$ Kumbh. ed. सौतिरुवाच. — $^{a}$) $K_{1,2,7}$ $D_{4,5,9}$ आश्चर्यं (for आख्यानं). — $^{b}$) $K_{1,2}$ परिक्षितो; $K_4$ पाराक्षि°; $K_7$ पारिक्षी°; $D_{4,5}$ $T_1$ $G_{1,3}$ पारीक्षि° (for पारिक्षि°). $K_{1,2,4}$ नृप (for नृपः). $K_6$ $V_1$ $B_{0,6-9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_{2,3,8}$ श्रुत्वा पार्थिवसत्तमः; $M_{1,5-7}$ श्रुत्वा भरतसत्तम. — $^{d}$) $G_2$ ताश्च (for सर्वाः). $K_{1,2,4}$ समाचरत्; $G_1$ lacuna; $M_{1,5-7}$ समारभ (for °भत्).

12 Before 12, $D_{n4}$ ins. सूत उवाच. After $12^{ab}$, $K_{1,2,4,6,7}$ $V_1$ $B_{0,6-9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_s$ $D_{2-5,7-9}$ T $G_{1-3,6}$ Kumbh. ed. ins.:

892* पृष्टेन शौनकाद्येह नैमिषारण्यवासिषु ।

[ $B_9$ $D_{n4}$ $D_s$ $D_9$ शौनकाद्येन; $D_{3,5}$ °काद्येषु; $D_7$ °काद्यैस्तु; T $G_{1-3,6}$ °काद्यैश्च (for °काद्येह). $K_6$ -वासिने; $V_1$ -वासिनः; $B_8$ (marg. as above) -वासिना; T $G_{1-3,6}$ -वासिभिः (for -वासिषु). ]

— $^{c}$) $K_{1,2,4,6,7}$ $V_1$ $B_{0,7-9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_s$ $D_{2-5,7-9}$ T $G_{1-3,6}$ Kumbh. ed. यद्वै; $B_6$ damaged (for राजन्). — $^{d}$) $B_6$ damaged. $M_7$ गुरवो; Ca (gloss: मम पित्रे लोमहर्षणाय व्यासाय वा) Cn (gloss: बृहस्पतये) °वे (as in text). $K_{1,2,4,6}$ $V_1$ $B_{0,7,8}$ (marg.)$_{,9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_s$ $D_{2,3,5,7,8}$ T $G_{1-3,6}$ तु; $K_7$ $D_{4,9}$ वि- (for मे). — $^{f}$) $K_{1,2,4}$ $D_5$ शृण्वतां. $K_7$ $D_{a4}$ $G_2$ शृण्वतोः कृष्णयोरपि.

13 $D_5$ reads $13^{abc}$ twice. — $^{a}$) $T_1$ स ह; $T_2$ न हि (for स हि). $K_{1,2,4}$ परममुनिर्; $K_{6,7}$ $V_1$ $B_{0,6-9}$ $D_{a3,a4}$ $D_{n1,n4}$ $D_s$ $D_{2-4,5}$ (both times)$_{,7-9}$ T $G_{1-3,6}$ Cp editions परमर्षिर् (for परमगुरुर्). $K_{1,2}$ T $G_{1-3,6}$ भुवनजनपतिर्; $K_4$ भुवनपरिजनपतिर्; $B_8$ $D_{n1,n4}$ $D_s$ $D_{2,3,8}$ editions जनभुवनपतिर् (for भुवनपतिर्). — $^{bc}$) $K_{1,2,4,6}$ $V_1$ $B_{0,8}$ $D_{n1}$ $n_4$ $D_s$ $D_{2,3,8}$ Kumbh. ed. पृथुधरणि($K_6$ $B_8$ $D_{n4}$ °णी)धरः; $D_5$ (both times)$_{,7}$ प्रभुर्धरणिधरं; T $G_{1,3,6}$ गिरिधरणिधरः; $G_2$ स्थरणीयविधिः (sic) (for धरणिधरः). $K_{1,2,4}$ $V_1$ T $G_{1,3,6}$ Cpp शम($K_1$ °त)नियमनि($T_1$ $G_{3,6}$ °वि)धिः श्रुतिनियमपरो; $K_6$ $D_{a4}$ $D_{n1}$ $D_{2,8}$ Cn (gloss: यमा नियमाश्च पञ्च पञ्च, अहिंसादयः सत्यादयः) श्रुति($D_{a4}$ °त)-विनय($K_6$ °नियम)वि($D_{a4}$ °नि)धिः शमनियमनिधिः; $K_7$ $D_{4,9}$ यमनियमविधिः श्रुतविनयनि($K_7$ °वि)धिः; $B_0$ $D_{n4}$ $D_s$ $D_8$ Cp श्रुतिविनयनिधिः श($B_0$ स)मनियमनिधिः

स्तव भवतु गतिर्हरिरमरहितः ॥ १३

तपसां निधिः सुमहतां महतो
यशसश्च भाजनमरिष्टकहा ।
एकान्तिनां शरणदोऽभयदो गतिदोऽस्तु वः
स मखभागहरस्त्रिगुणातिगः ॥ १४

चतुष्पञ्चधरः पूर्तेष्टयोश्च फलभागहरः ।
विदधाति नित्यमजितोऽतिबलो
गतिमात्मगां सुकृतिनामृषिणाम् ॥ १५

तं लोकसाक्षिणमजं पुरुषं
रविवर्णमीश्वरगतिं बहुशः ।
प्रणमध्वमेकमतयो यतयः C. 12. 13447 B. 12. 347(6)121 K. 12. 356. 19

( by transp. ); B6. 8. 9 Da3 श्रुति( Da3 °त )विनयविधिः ( B6 °निधेः; Da3 °निधिः ) श्रु( B8 स्मृ )तिनियमपरो; D5 ( both times ). 7 श्रुतनियमविधिः श्रुतिनियमपरो; G2 lacuna; Kumbh. ed. श्रुतिविनयपरः शमनियमनिधिः. B7 om. शमनियमनिधिः. B7 श्रुतनियमपरो ( for श्रुतिविनयनिधिर् ). K1. 2. 4 T G1–3. 6 द्विजगणसहितस्; K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–4. 5 ( both times ). 7–9 Kumbh. ed. द्विजवरसहितस्; Cp ( gloss: द्विजवरैर्गुरुत्वेन पूजितः ) द्विजवरमहितस् ( for °परमहितस् ). — d ) Bo. 7. 8 Dn1. n4 Ds2 D2. 3. 8 Kumbh. ed. तव च; Da4 तव तु; D7 lacuna ( for तव ). Da4 om भवतु. Dn4 अमराहितां; G2 अमराहिता; M1. 7 अमरवर ( for °हितः ).

14 a ) D7 om. from तपसां up to भाजन ( in $14^{b}$ ). Before तपसां, K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 8. 9 ins. अ( Dn1. n4 Ds ह्य )सुरवधकरः. M1. 6. 7 तपसां च ( for तपसां ). K1. 2. 4 lacuna; Dn4 निधिं ( for निधिः ). K1 सहसां; K2. 4 महसां; K7 D4. 9 सुकृतां; Da3 सुमतां; Ds2 सुमहसां ( for °तां ). K1. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 5. 8. 9 यशसां; K2. 4 lacuna ( for महतो ). — b ) T2 G2 जननम् ( for भाजनम् ). G2 अरिकाः ( for अरिष्टकहा ). K1. 2. 4 च निधिर्मधुकैटभहा ( K1 °या ); K6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 8. 9 च भाजनं मधुकैटभहा. — c ) G2 om. गतिदो. K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 Cn ( gloss: कृतधर्मः, कृतयुगधर्मः ) कृत( K1. 2. 4 पर )धर्मविदां गतिदोभयदो. — d ) K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 om. स. G1 सुखभाग° ( for मख° ). G2 om. हर. K1. 2 [ऽ]स्तु स ते शरणं त्रिगुणोधि( K2 °णाद्वि )गुणः; K4 Bo. 8 Dn4 Ds D2. 3. 8 तु शरणं स ते त्रिगुणोविगुणः ( Bo Dn4 त्रिगुणाधिगुणः ); K6 [ऽ]स्तु ते शरणं त्रिगुणाधिकगुणः; K7 D4. 5. 7 [ऽ]स्तु स ते शरणं ( K7 °ण्यं ) त्रिगुणोविगुणः; V1 [ऽ]स्तु ते शरणं त्रिगुणातिगुणः; B6. 9 Da3. a4 [ऽ]स्तु ते शरणं त्रिगुणाधिगुणः; B7 lacuna; Dn1 [ऽ]स्तु शरदां शतं त्रिगुणोविगुणः; T1 G3 त्रिगुणाधिकः ( for °तिगः ).

15 ab ) K1. 2. 4. 6. 7 V1 Bo. 6–9 Da3 Dn1 Ds D2–5. 7–9 Cn ( gloss: चत्वारो, वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्याः आत्मानः, तान्धारयति ) Csp ( gloss: चतुर्णां चित्तबुद्धिमनोहंकाराणां सर्वात्मकत्वे धारकः ) चतुरात्मधरः; Da4 °रात्माधरः; Dn4 च नरान्य°; T1 चतुष्कं च यं*; G1 चतुष्पंचस्मरः; Cs ( gloss: चतुरो वेदान् पञ्च यज्ञांश्च धारयति ) °धरः ( as in text ). K6 पूर्णेष्टयोश्च; Da3 पूर्वै°; Ds2 पूर्तेष्टयोष्ट°; T2 °योग° ( for °योश्च ). G2 फलभागहरिः ( for °भागहरः ). K1. 2. 4. 7 V1 D4. 5. 7. 9 फ( K2 प )लभागभुगिष्ट( K1 °ग तु गिष्ट°; V1 °गभूयिष्ठ )तमेतरयोः ( for पूर्तेष्टयोश्च फलभागहरः ). — After $15^{ab}$, K7 D4. 9 Cp ins. गतिरस्तु स ते मखभागहरः. — c ) K7 V1 Bo. 6–9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 T1 G1–3. 6 विदधातु; T2 °धाम ( for °धाति ). K1. 2. 4 स नित्यमजो; B8 D4 G2 नित्यमजिता ( G2 °ते ) ( for °जितो ). K6 Dn1 D2 [ऽ]तिचलो ( for °बलो ). — d ) K1. 2. 4 आत्मविदां; K7 D4. 9 °याजिनां; V1 B8 T1 G1. 3. 6 °वतां; B6. 7. 9 Da3. a4 D5. 7 °नां; T2 G2 °वान् ( for °गां ). K1. 2. 4 T1 G3. 6 सुकृतां; G2 सुकृतम्; M7 °तीम् ( for °तिनाम् ). K1. 2. 4 च मुने; K7 D4. 9 अखिलां; Da4 Ds1 ऋषीणां.

16 V1 reads $16^{ab}$ on marg. — a ) Da4 om. तं. K1. 2. 4 अशेष° ( for लोक° ). B6. 7. 8 ( marg. ). 9 Da3. a4 -साक्षिकम् ( for °णम् ). B8 M1. 6. 7 अजरं; Dn4 अतं ( for अजं ). After पुरुषं, K6. 7 Bo. 7 Da3 Dn1. n4 Ds D2. 3. 8 ins. पुराणं; B8 ins. it before पुरुषं. — b ) K6 V1 Bo Da4 Dn1. n4 Ds1 D2. 3. 5. 8 ईश्वरं ( for °र- ). V1 lacuna; Da3. a4 मतिं ( for -गतिं ). K1. 2 पुरुषः ( for बहुशः ). — c ) K1 प्राणमधुम्; M1. 6. 7 प्रणवमध्वम् ( for प्रणमध्वम् ). K1. 2. 4. 6. 7 Bo. 6. 7. 9 Da3. a4 Dn1. n4 Ds D2–5. 7–9 एकमनसो; G2 एकांतमतयो; M1. 6. 7 एकतयो ( for एकमतयो ). K4. 6 B7 Da4 Dn1. n4 Ds D2. 3. 8 यतः ( for यतयः ). — d ) K7 सलिलोद्भवो. After ऽपि, K2 ins. गतिमात्मविदां

C. 12. 13447
B. 12. 347[6].21
K. 12. 356. 19

सलिलोद्भवोऽपि तमृषिं प्रणतः ॥ १६
स हि लोकयोनिरमृतस्य पदं
सूक्ष्मं पुराणमचलं परमम् ।
तत्सांख्ययोगिभिरुदारधृतं
बुद्ध्या यतात्मभिर्विदितं सततम् ॥ १७

इति श्रीमहाभारते शान्तिपर्वणि चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३४ ॥ ]

# [ ३३५ ]

जनमेजय उवाच ।
श्रुतं भगवतस्तस्य माहात्म्यं परमात्मनः ।
जन्म धर्मगृहे चैव नरनारायणात्मकम् ।
महावराहसृष्टा च पिण्डोत्पत्तिः पुरातनी ॥ १
प्रवृत्तौ च निवृत्तौ च यो यथा परिकल्पितः ।
स तथा नः श्रुतो ब्रह्मन्कथ्यमानस्त्वयानघ ॥ २

---

सुकृतां च मुने. Before प्रणतः, T1 ins. न मनुते; G3. 6 ins. नमते. B6. 7 om. प्रणतः. Da4 स सलिलोद्भवोपि तं प्रणतः; G2 सलिलोद्भवोद्भवोपि तमृषीणां प्रणमतां. ❀ Cn: सलिलमुद्भवो यस्य स नारायणः शेषशायी । तमृषिं, वासुदेवम् ॥ Cp: सलिलोद्भवो ब्रह्मा । ❀

17 D8 om. 17. — a) B7 is damaged from स हि up to पुरा (in 17b). B6 lacuna; T2 न हि; G2 स ह (for स हि). K2 पदां (for पदं). — b) K7 D4. 9 शूक्ष्मं. K6 B0. 6. 9 Da3. a4 Dn1. n4 D8 D2. 8 परायणम् (for पुराणम्). K6 B0. 7. 8 Dn1. n4 D8 D2. 8 हि पदं; V1 B8. 9 Da3. a4 D5 हि परं; T1 G1. 3. 6 परं (for परमम्). K1. 2. 4 परमं (K4 °म-) सुसूक्ष्ममचलं स पदं; G2 सूक्ष्मं पुराणमनूचनीबकं परम. — c) K1. 2. 4 सर्व-; V1 स हि; T1 G2. 3. 6 मतं; T2 तं; G1 मतः (for तत्). K1. 2. 4 lacuna; G1 सांख्यं (for सांख्य-). K1. 2. 4 उदारधृ(K2 °वृ)तिर्; K6 B0 Dn1 उदारवृतं (B0 om. वृतं); K7 D4 °वृत्ति-; B8 Ds1 D7 T2 G1. 2 उदाहृतं; Da4 उदारं धृतं; T1 G3. 6 उदाहृतं पदं (for उदारधृतं). ❀ Cn: हे उदार । धृतमिति पाठान्तरे ध्यातम् ॥ Cp: उदारतया, महत्तया धृतं, चित्ते निवेशितम् । ❀ — d) K1. 2. 4 मनसा (for बुद्ध्या). Dn4 आत्मनात्मभिर्; M1. 5-7 यतात्म- (for यतात्मभिर्). K1. 2. 4 उपेत इह (K1 °व); K6 V1 B0. 6. 7. 9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 7 इदं सनातनं (Da3. a4 °न); K7 D4. 9 इदं सततं; T G3. 6 अजं नमत; G1 अजनमतः; G2 अजन्मनः (for विदितं सततम्). B8 व्यपेतात्मभिरिदं सनातनं. After सततं, D4 M5 ins. इति.

Colophon. Ś1 D6 missing. K3. 5 B1-5 Da1. a2 Dn2. n3 D1 G4. 5 M2-4 absent. — *Sub-parvan:* K1. 2. 4. 6. 7 V1 B0. 6-9 Da3. a4 Dn1. n4 D8 D2-5. 7-9 T G1. 2. 6 M1. 5-7 मोक्षधर्म. — *Adhy. name:* K1. 2. 4. 6 V1 B0. 6-9 Dn1. n4 D8 D2. 3. 7. 8 T G6 M1. 5-7 नारायणीयं; K7 Da3. a4 D4. 5. 9 नरनारायणीयं. — *Adhy. no.* (figures, words or both): K6 72; B7 Dn4 170; B8 276; Dn1 G1 172; Ds2 T1 G6 173; D8 167; T2 186; G2 202; G3 174; M1. 6. 7 169; M5 204. — *Śloka no.:* Da4 22; Dn7. n4 21.

## 335

☞ This adhy. is missing in Ś1 D6 (cf. v. l. 12. 329. 18; 283. 15).

1 K1. 2. 4. 7 Dn1. n4 D8 D2-4. 8. 9 T1 G1-3. 6 Kumbh. ed. शौनक; T2 ऋषय (for जनमेजय). — b) K1. 2 महात्म्यं. — c) G2 धर्मगृहेश्; M1. 6. 7 धर्मं गृहे. — e) B6 -सृष्टिश्; B7 lacuna; T2 -सृष्टौ; G1 -सृष्टां (for -सृष्टा). K1. 2 [अ]पि (for च). — f) B7 damaged. K1. 2. 4 D8 D5. 7 M6 सनातनी (M6 °ना); M1. 5. 7 पुरातना (for °तनी).

2 a) Da3 om. (hapl.) निवृत्तौ च. K6 निवृत्तौ च प्रवृत्तौ च. — b) T2 -कल्पितं. — c) B0 Dn1. n4 D8 D2. 3. 8 तथा च; Kumbh. ed. तथा स (by transp.). D5. 7 G2 श्रुतं (for श्रुतो). K1. 2. 4. 6 Da3. a4 D5. 7 सौते; K7 D4. 9 धर्मः; T G1. 3. 6 सूत; G2 तात (for ब्रह्मन्).

C. 12. 13920
B. 12. 354. 3
K. 12. 373. 3

स्वर्गद्वारकृतोद्योगो येनासौ त्रिदिवं गतः ॥ ३
असन्नधीरनाकाङ्क्षी नित्यमुञ्छशिलाशनः ।
सर्वभूतहिते युक्त एष विप्रो भुजंगम ॥ ४
न हि देवा न गन्धर्वा नासुरा न च पन्नगाः ।
प्रभवन्तीह भूतानां प्राप्तानां परमां गतिम् ॥ ५

नाग उवाच ।
एतदेवंविधं दृष्टमाश्चर्यं तत्र मे द्विज ।
संसिद्धो मानुषः कायो योऽसौ सिद्धगतिं गतः ।
सूर्येण सहितो ब्रह्मन्पृथिवीं परिवर्तते ॥ ६

इति श्रीमहाभारते शान्तिपर्वणि एकपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५१ ॥

---

time ) देवाश्; B6–9 Da3 (first time). a4 जितश्; G3. 6 ध्रुवश्; M1. 7 ऋतश् (for ऋचश्). D9 च तेन; T2 चान्येन (for चानेन). K6 (both times) T2 विप्रेंद्र (for विप्रेण). — $3^{bc}$ is partly damaged in B7. — $^{b}$) K6 (first time) B0 (both times) Dn1. n4 Ds D2. 3. 8 G3. 6 Cs (gloss : वैदिकमन्त्रैः । सम्यक् हितं देवसाक्षात्कारात्मकं प्रतिपादयतीति ) संहिताभिर् (for संहितान्तर्). K4. 6 B0 (last two first time) Da3 (second time) Dn1 Ds D2. 8 T1 G3. 6 अभि( T1 °भी )ष्टुतः; B0 (second time) अभिष्टताः; Dn4 अभिष्टुता; D8 °वृतः; G2 °ष्टता (for °ष्टुताः). K6 (second time) स्तंघातांतरबिश्नुना (sic); K7 D5. 7. 9 तपःसंप्राप्तभाक्षिणा (D7 °दाक्षिणा; D9 °भिक्षुणा); B6. 8. 9 Da3 (first time). a4 संघातांतरजिष्णुना; D4 संप्रातं भिक्षुणा तपः. ❀ Cs : अन्तराभिष्टुताः, मनसा जप्ताः । ❀ — $^{c}$) K6 B0 Dn1. n4 Ds D2. 3. 8 स्वर्गद्वारे; B6. 8. 9 °द्वारः (for °द्वार-). K1. 6 Dn4 -कृतो योगे (K6 Dn4 °गो); K7 -कृतोद्योगैर्; D5. 7 -गतोद्योगा (D7 °गी); M1. 7 -कृतोद्योगा (for °द्योगो). — $^{d}$) D5. 7 तेन (for येन). M5 [ आ ]सीत् (for [ अ ]सौ). T1 येनास च दिवं गतः; G3. 6 येन चास्मिंर्दिवं गतः.

4 $4^{abc}$ is partly damaged in B6. V1 reads $4^{ab}$ on marg. — $^{a}$) K6 B0 Da3. a4 Dn1. n4 D2. 3. 8 असंगतिर्; K7 च्युतपन्नधीर्; V1 M5 आसन्नधीर्; Ds T1 G2. 3. 6 M1. 7 असन्निधिर्; D5. 7 आश्रितश्च; T2 असन्नाधिर् (for असन्नधीर्). K1 अनाकांक्षो; K2. 4 निराकांक्षो; K7 हृवाकांक्षी; D5. 7 फलाकांक्षी (for अनाकाङ्क्षी). B7. 8 आसन्नधीरताकांक्षी; D4. 9 आसीदफलताकांक्षी. — $^{b}$) K6 नित्य- (for नित्यम्). K6 -युंजं; Dn4 उंछ्य-; D9 उञ्छ-; M1 ढंज- (for उञ्छ-). K2 -शलाशनः; D8 T2 -फलाशिनः; D9 G2. 3. 6 M1. 5. 7 -सिलाशनः; T1 -सिलाशिनः (for -शिलाशनः). ❀ Cs : उञ्छशिलाशनः, क्षेत्राद्रीह्यादिषु स्वामिभिरपकृतेषु लूनेषु सत्सु, दैवात्पातितां मञ्जरीमादाय उत्पतन्ति पक्षिणः । तं यत्र वृक्षादौ मञ्जरीं निक्षिप्य स्थापयित्वा तद्गतान्कणान्भक्षयन्ति तत्र पतितधान्येन यात्रामात्रशीलः स उञ्छशिलाशनः । ❀ — V1 om. $4^{cd}$. — $^{c}$) Ds1 सर्व (for सर्व-). D5. 7 -भूता( D7 °त )हितैर् (for -भूतहिते). — $^{d}$) Dn4 एव; G2 ह्येष (for एष). Dn4 विप्रा (for विप्रो). K6 B7–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 G2 भुजंगमाः; B0 °गमान्; T1 M1 °गमः (for °गम). — After 4, G2 M1. 5. 7 ins. :

918* एष स्वेन प्रभावेन संप्राप्तो निर्मलां गतिम् ।
सुकृतेनास्य यत्नेन स्पृहयन्ते भवद्विधाः ।
[ (L. 1) M1. 5. 7 विमलां (for निर्मलां). ]

5 $5^{abc}$ is partly damaged in B7. V1 reads 5 on marg. — $^{a}$) T G3. 6 M5 न च (for न हि). — $^{b}$) Da4 Ds1 नासुरान्; D5 न सुरा (for नासुरा). — $^{c}$) K7 D4. 5. 7. 9 T1 G3. 6 प्रभवंति हि (D4 om. हि) (for °वन्तीह). K1. 2. 4. 6 B8 बुद्धानां (for भूतानां). — $^{d}$) K1. 2. 4 प्राप्तवान्; K6 प्राप्ता तं (for प्राप्तानां). D9 om. from. परमां up to संशयः (in 12. 352. $9^{b}$). T1 om. from परमां up to द्विज (in $6^{b}$). K1 परमा; K6 B0. 6–9 Da3. a4 Dn1. n4 Ds D2. 3. 8 उत्तमां (for परमां). Da4 गतिः (for गतिम्). V1 प्राप्तं मोक्षं प्रसादतः.

6 D9 om. 6; T1 om. $6^{ab}$ (for both, cf. v. l. 5). MSS. om. the ref. — $^{a}$) Da4 Dn4 D4 एतदेव (for एतदेवं-). K1 एवं विधि- (for एवंविधं). — $^{b}$) G3 ननु; G6 न तु (for तत्र). D4. 5. 7 आश्चर्यं द्विजसत्तम (D4 °मः). — $^{c}$) K6 संसिद्ध- (for °द्धो). K4 कार्यों; K6 B0. 6. 8. 9 Da3. a4 Dn1. n4 Ds D2. 3. 8 कामं; V1 काले; B7 damaged; D5. 7 कार्यं; T G3. 6 M5 कश्चिद्; G2 कांतो; M1 काम्यो; M7 काम्ये (for कायो). — $^{d}$) B7 partly damaged. T2 संसिद्धगतिसंगतः. — $^{f}$) Dn4 पृथिव्यां (for °वीं). K1 अन्ववर्तत; K2. 4. 6 V1 B6–9 Da3. a4 अनुवर्तत (Da3. a4 °तां); D5. 7 परिवर्तिता (for परिवर्तते).

# ३५२

ब्राह्मण उवाच ।
आश्चर्यं नात्र संदेहः सुप्रीतोऽस्मि भुजंगम ।
अन्वर्थोपगतैर्वाक्यैः पन्थानं चास्मि दर्शितः ॥ १
स्वस्ति तेऽस्तु गमिष्यामि साधो भुजगसत्तम ।
स्मरणीयोऽस्मि भवता संप्रेषणनियोजनैः ॥ २
नाग उवाच ।
अनुक्त्वा मद्गतं कार्यं क्वेदानीं प्रस्थितो भवान् ।
उच्यतां द्विज यत्कार्यं यदर्थं त्वमिहागतः ॥ ३
उक्तानुक्ते कृते कार्ये मामामन्त्र्य द्विजर्षभ ।
मया प्रत्यभ्यनुज्ञातस्ततो यास्यसि ब्राह्मण ॥ ४
न हि मां केवलं दृष्ट्वा त्यक्त्वा प्रणयवानिह ।
गन्तुमर्हसि विप्रर्षे वृक्षमूलगतो यथा ॥ ५
त्वयि चाहं द्विजश्रेष्ठ भवान्मयि न संशयः ।
लोकोऽयं भवतः सर्वः का चिन्ता मयि तेऽनघ ॥ ६ C. 12. 13930 B. 12. 365.(4). 6 K. 12. 374. 6

---

Colophon om. in V1 B7–9 Da3. a4 D9; Ś1 D6 G1 M6 missing: K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan:* K1. 2. 4. 6. 7 Dn1. n4 D8 D2–5. 7. 8 T G2. 3. 6 M1. 5. 7 मोक्षधर्म. — *Adhy. name:* K1. 2. 4. 6. 7 Bo Dn1 D8 D2–5. 7. 8 उंछवृत्त्युपाख्यानं; M1. 7 उंछवृत्तिप्रशंसनं. — *Adhy. no.* (figures, words or both): K6 90; Dn1 T1 G6 189; Dn4 188; Ds2 191; D8 183; T2 G2 12; G3 190; M1. 7 186; M5 222. — *Śloka no.:* Da4 Dn1. n4 D8 7.

## 352

☞ This adhy. is missing in Ś1 D6 G1 M6 (cf. v. l. 12. 336. 65; 283. 15; 340. 1; 346. 1). For transposition in T2 G2, cf. v. l. 12. 340. 4.

1 D9 om. up to संशयः (in 9b) (cf. v. l. 12. 351. 5). T1 om. the ref. 1 is partly damaged in B6. T1 om. 1bcd. — b) K7 D4. 5. 7 सं· (for सु·). K1 Bo [ऽ]सि (for ऽस्मि). — c) K7 अन्वर्थपतितैर्वाक्यैः; D4. 5. 7 अन्यार्थोपगतैर्वाक्यैः; M5 अन्वर्थोपहितैर्वाक्यैः. — d) K7 D5. 7 चापि; D4 वापि (for चास्मि).

2 D9 om. 2 (cf. v. l. 1). K1 om. (hapl.) 2–3. — a) M1 अस्ति (for स्वस्ति). D5 च (for ते). — b) G3. 6 साध्ये (for साधो). T1 साधु पन्नगसत्तम. — c) K2 T1 भवतः; D4 °तां (for °ता). — d) K6 V1 B6 (marg. as in text). 7–9 Da3. a4 ·नियोजने (for °नैः). K7 संप्रेषे समयोजने; D4. 5. 7 संक्षेपेण प्रयोजनं (D4 °ने).

3 K1 D9 om. 3 (cf. v. l. 2, 1). T1 om. the ref. K6 नारद (for नाग). — a) K2. 4 मत्कृतं; K6 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. ह्यद्गतं (for म°). — b) G2 इदानीं (for क्वे°). K6 [ऽ]भवत्; Da3 [ऽ]भवन्; Da4 भवेत् (for भवान्). — 3cd is damaged in B6. — c) T2 तव (for द्विज). V1 Bo तत्कार्यं (for य°). K7 D4. 5. 7 उच्यतां द्विजशार्दूल. — d) K2 यदर्थमिह चागतः.

4 D9 om. 4 (cf. v. l. 1). B6 is partly damaged. — a) K1. 2. 4 भक्तानुक्ते; K7 उक्तामुक्ते; V1 Bo तसिद्धु ते; D7 T1 G3. 6 ततस्तु ते; T2 उक्तेनुक्ते; M1. 7 उक्त्वा रक्ते (for उक्तानुक्ते). — b) T1 मामनंत्य; T2 मा मंत्रेण; G2 स मामंत्र्य (for मामामन्त्र्य). — c) K1 प्रत्यभिनुज्ञातस; T1 प्रत्यह्यनुज्ञातस (for प्रत्यभ्य°). D5 मयागप्रत्यनुज्ञातस् (sic). — d) V1 Da4 T यास्यति (for °सि). V1 B6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. सुव्रत (for ब्राह्मण). K1. 2. 4 ततो ब्राह्मण यास्यसि.

5 K6 D9 om. 5 (for D8, cf. v. l. 1). — ab) D4 मे (for मां). Da3. a4 D5. 7 transp. दृष्ट्वा and त्यक्त्वा. K1. 2. 4 V1 प्रणयवादिनं; Da4 D5. 7 °यवानसि; T2 °वामिह (for °वानिह). — T2 om. 5c–7b. — d) T1 G3. 6 ह्यसि (for यथा). D5. 7 तरुमूलफलो यथा.

6 D9 T2 om. 6 (cf. v. l. 1, 5). — a) T1 विभु· (for द्विज·). ❀ Cn: त्वयि चाहं, भक्तिमानिति शेषः। ❀ — c) K7 लोका ये (for लोकोऽयं). D5. 7 सर्वतः (for भवतः). T1 सर्व (for सर्वः). — d) B6 damaged. T1 कं रिवतं (sic) (for का चिन्ता). K1. 2. 4 तेन ते (for तेऽनघ).

C. 12. 13631
B. 12. 365(4). 7
K. 12. 374. 7

ब्राह्मण उवाच ।
एवमेतन्महाप्राज्ञ विज्ञातार्थं भुजंगम ।
नातिरिक्तास्त्वया देवाः सर्वथैव यथातथम् ॥ ७
य एवाहं स एव त्वमेवमेतद्भुजंगम ।
अहं भवांश्च भूतानि सर्वे सर्वत्रगाः सदा ॥ ८
आसीत्तु मे भोगपते संशयः पुण्यसंचये ।
सोऽहमुञ्छव्रतं साधो चरिष्याम्यर्थदर्शनम् ॥ ९
एष मे निश्चयः साधो कृतः कारणवत्तरः ।
आमन्त्रयामि भद्रं ते कृतार्थोऽस्मि भुजंगम ॥ १०

इति श्रीमहाभारते शान्तिपर्वणि द्विपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५२ ॥

---

7 D9 om. 7; T2 om. $7^{ab}$ (cf. v. l. 1, 5). $7^{ab}$ is damaged in B6. —$^{a}$) K1 G2 एतं; V1 एव (for एतन्). B7–9 Da3 महाप्रज्ञ. —$^{b}$) K1. 2 T1 G2. 3. 6 M1. 5. 7 विज्ञानार्थं; K4 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. विदितात्मन्; K7 D4 विज्ञातार्थं (D4 °र्थें); V1 Bo. 8 (marg.) D5. 7 जिज्ञासार्थं (for विज्ञातार्थं). D6 भुजंगमं. —$^{c}$) K1. 2 नातिक्रांता(K2 °त )स्; T2 °रिक्तः (for °रिक्तास्). T2 स्वया (for त्वया). Bo नातिविद्या त्वया देवाः; T1 नातिरिक्ततो देवाः (sic). —$^{d}$) K1. 2. 4 सर्वथैवं; T2 सर्वदैव; G2 सर्वथेह; M1. 5. 7 सर्वे चैव (for सर्वथैव). K7 D4 कथंचन; D3. 5 यथायथं (for °तथम्).

8 D9 om. 8 (cf. v. l. 1). Before 8, T2 ins. ब्राह्मणः. —$^{a}$) Dn1 Ds2 D2–4. 8 M5 Kumbh. ed. स (for य). K6 B6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. एव त्वं; Bo एवायं; D5. 7 एषोहं (for एवाहं). D7 एष (for एव). K6 B6–9 Da3. a4 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. [अ]हं (for त्वम्). T1 य एवासं स एव त्वम्; G2 एष चाहं स एव त्वम्. —$^{b}$) T G3. 6 एव (for एतद्). K1. 2. 4. 6 V1 Bo. 6–9 Da3. a4 Dn1. n4 D8 D2. 3. 5. 7. 8 Cn Kumbh. ed. यो(K6 अ)हं स तु (V1 त्वं) भवानपि (B6 °निति); M5 एवं सति भवानपि. ❀ Cn: तुशब्दोऽवधारणे । एतेन भेदाभेदपक्षो निरस्तः । ❀ —$^{c}$) T1 भुजाश्च (for भवांश्च). K7 G2 भूताश्च; Bo D4 भूतांश्च (for भूतानि). —$^{d}$) B6–9 Da3. a4 Dn1 D3. 8 Kumbh. ed. यत्र गताः; Dn4 यत्र मताः; D8 यत्रागताः; D4 सत्त्वगताः; T2 ते सर्वगाः (for सर्वत्रगाः). K6 सर्वे यत्र सदा गताः; T1 G3. 6 सर्वे सर्वत्र शाश्वताः.

9 D9 om. up to संशयः (cf. v. l. 1). —$^{a}$) D4 आसीच्च; D5. 7 आसां न (for आसीत्तु). K4. 6. 7 V1 Bo. 7. 9 D5. 7 T2 G2. 3. 6 Kumbh. ed. Cnp भोगिपते; Cn (gloss: भोगः अहिकुलम्) भोग° (as in text). T1 आसीत्ततेजोभिपते (sic). —$^{b}$) T1 संशये (for °यः). K1. 2. 4 Bo. 6. 7. 9 -संक्षये; V1 -संक्षरे; D5. 7 -संभवे (for -संचये). —$^{c}$) M5 उंछव्रते. T1 बाध्ये (for साधो). —$^{d}$) B6 damaged. K7 तरिष्यामि; D4 T1 वरिष्यामि (for चरिष्यामि). K6 अद्य; B7. 9 अनु-; Dn1 D4 अथ (for अर्थ-). K4 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. -साधनं; K7 D4. 5. 7. 9 -साधकः; T2 -दर्शकः; G3. 6 -दर्शितं (for -दर्शनम्). G2 चरिष्ये धर्मदर्शिभिः.

10 B6 damaged. —$^{a}$) K6 V1 एव; D5. 7 एवं (for एष). T1 निश्रये. K1 साधुः; K2 साधु; T1 G3. 6 साध्ये (for साधो). —$^{b}$) K2 कृत- (for कृतः). K4 D4. 5. 7. 9 यथा कालो नि(K4 °लोति-; D4 °लानु-; D9 °लोनु )वर्तते; K6 B7. 9 कृतं कारणवत्तरं; V1 Bo. 8 Da3. a4 Dn1. n4 D8 D2. 3. 8 Kumbh. ed. कृतं (Bo °तः) कारणमुत्तमं; G2 कृतः कारणवत्ततः. —K4 om. $10^{cd}$. —$^{d}$) K7 कृतार्था; D4. 9 ह्यस्यर्थो. T1 स्म (for ऽस्मि).

Colophon om. in K4; Ś1 D6 G1 M6 missing: K3. 5 B1–5 Da1. a2 Dn2. n3 D1 G4. 5 M2–4 absent. — *Sub-parvan:* K1. 2. 6. 7 B6. 9 Da3. a4 Dn1. n4 D8 D2. 4. 5. 7–9 T G2. 3. 6 M1. 5. 7 मोक्षधर्म. — *Adhy. name:* K1. 2. 6. 7 V1 Bo. 6–9 Da3. a4 Dn1 D8 D2–5. 7–9 M1. 5. 7 उंछवृत्त्युपाख्यानं. — *Adhy. no.* (figures, words or both): K6 91; B7 188; B8 260; Dn1 T1 G6 190; Dn4 189; Ds2 192; D8 184; T2 G2 13; G3 191; M1. 7 187; M5 223. — *Śloka no.:* Dn1. n4 D8 10.

# ३५३

भीष्म उवाच ।

स चामन्त्र्योरगश्रेष्ठं ब्राह्मणः कृतनिश्चयः ।
दीक्षाकाङ्क्षी तदा राजंश्च्यवनं भार्गवं श्रितः ॥ १
स तेन कृतसंस्कारो धर्ममेवोपतस्थिवान् ।
तथैव च कथामेतां राजन्कथितवांस्तदा ॥ २
भार्गवेणापि राजेन्द्र जनकस्य निवेशने ।
कथैषा कथिता पुण्या नारदाय महात्मने ॥ ३
नारदेनापि राजेन्द्र देवेन्द्रस्य निवेशने ।
कथिता भरतश्रेष्ठ पृष्टेनाक्लिष्टकर्मणा ॥ ४
देवराजेन च पुरा कथैषा कथिता शुभा ।
समस्तेभ्यः प्रशस्तेभ्यो वसुभ्यो वसुधाधिप ॥ ५
यदा च मम रामेण युद्धमासीत्सुदारुणम् ।
वसुभिश्च तदा राजन्कथेयं कथिता मम ॥ ६
पृच्छमानाय तत्त्वेन मया तुभ्यं विशां पते ।
कथेयं कथिता पुण्या धर्म्या धर्मभृतां वर ॥ ७
तदेष परमो धर्मो यन्मां पृच्छसि भारत । C. 12. 13942 B. 12. 366[5]. 8 K. 12. 375. 8

## 353

☞ This adhy. is missing in Ś1 D6 G1 M6 (cf. v. l. 12. 336. 65; 283. 15; 340. 1; 346. 1). For transposition in T2 G2, cf. v. l. 12. 340. 4.

1 K4 om. 1ab with ref. — a) G2 M1.5.7 तमामंत्र्य (for स चा°). K1.2 [उ]रगपतिं; K7 D4.5.7 नरश्रेष्ठ (D5.7 °ष्ठो); D9 नृपश्रेष्ठ (for [उ]रगश्रेष्ठं). T1 शिवमंत्रोरगाश्रेष्ठं. — c) D9 दीक्ष्याकांक्षि (sic). T2 तथा; G2 M1.5.7 ततो (for तदा). — d) K4 चवनं. T1 च्यवनं गर्भसंश्रितं; G2 M1.7 भार्गवं (G2 °व-) च्यवनं श्रितः.

2 The portion from 2 up to end of this adhy. is lost in B6 on missing fol. — a) K4 हत- (for कृत-). D4.9 -सत्कारा (D9 °रो); T1 -सस्पारो; T2 -संकाशो (for -संस्कारो). — b) Dn1.n4 D2 [अ]भि-; Ds1 [अ]ध-; Bom. Kumbh. ed. [अ]धि- (for [उ]प-). T2 -जग्मिवान् (for -तस्थिवान्). — c) K4 तदेव; B0 G2 तत्रैव; D4 तवैव; D9 तदैव; T1 तस्यैव; M1.7 अत्रैव (for तथैव). B8 Da4 ह्येष; T1 एतो; T2 एषां (for एतां). K6 तत्रैव च कथा ह्येषा; Da3 तथैव च कृता ह्येषा. — d) B0 G3 तथा (for तदा).

3 B6 missing (cf. v. l. 2). B7 damaged. — a) Ds1 भार्गवेन. T1 [अ]भि (for [अ]पि). — K1.2.4 om. (hapl.) 3b–4a. — b) K6 कनकस्य (for जन°). — Ds2 reads 3c–4b on marg. — c) B0 तथैव; Dn4 D5 तथैषा; T2 तेनैव (for कथैषा). K6 Da3.a4 कथितैषा कथा पुण्या. — d) D7 महामुने (for °त्मने).

4 B6 missing (cf. v. l. 2). B7 damaged. K1.2.4 om. 4a (cf. v. l. 3). Ds2 reads 4ab on marg. — a) Da3 नारदो न (for °देन). — b) K7 D4.5.7.9 देवेशस्य (for °न्द्रस्य). — c) V1 T1 कथितं (for °ता). K7 D5.9 भारत-; G3 M1.7 वदतां (for भरत-). — d) Dn4 दृष्टेनाक्लिष्टकर्मणा.

5 B6 missing (cf. v. l. 2). — a) K7 पुनः (for पुरा). — b) K6 V1 B0.6–9 Da3.a4 Dn1.n4 D2.3.8 Kumbh. ed. transp. कथा and कथिता. K6.7 D4.5.7.9 पुरा; T2 विभो; G3 पुनः (for शुभा). — D4 om. 5c–6c. — c) K1.2.4 प्रसिद्धेभ्यो (for प्रशस्तेभ्यो). — d) K6.7 B7–9 Da3.a4 Dn1.n4 D8 D2.3.8 Kumbh. ed. विप्रेभ्यो; D5 lacuna; T2 मनुभ्यो (for वसुभ्यो).

6 B6 missing (cf. v. l. 2). D4 om. 6abc (cf. v. l. 5). — b) T1 G3.6 तु (for सु-). K2 सुदारुणं. — 6cd is damaged in B7. — d) T G3.6 कथैषा (for कथेयं). D5.7 कथितेयं कथा मम.

7 B6 missing (cf. v. l. 2). — a) Da3 om. पृच्छ. K1 पृच्छमाणाय तत्तेन; G3.6 °मानस्य तत्त्वेन. — T1 om. 7b. — b) D5.7 तुल्यं (for तुभ्यं). K1.2.4 मया ते शुभदोत्तमा; K6 मया वैषोत्तमानघ; V1 B7–9 Da3.a4 Dn1.n4 D8 D2.3.8 Kumbh. ed. मया चैवो(V1 B7.8 Da3.a4 °षो)त्तमा तव; T2 G3.6 M5 मयाप्यद्य तवानघ; M1.7 मयाप्यद्य शुभा तव. — d) Ds1 D9 M1 धर्मा (for धर्म्या). Da4 D4 वरः.

8 B6 missing (cf. v. l. 2). — a) K1 यदेष; K2 तदेषा; K6 T2 Kumbh. ed. तदेव; Dn1.n4 D8 D2.3.8 यदयं; T1 G3.6 स एष (for तदेष). B0 वै परो; G3 परमे (for परमो). — b) T1 G3.6 यस्माद; M1.6.7 यन्मा (for यन्मां). K7 M5 (*sup. lin.* as in

C. 12. 13842 B. 12. 366(3). 8 K. 12. 373. 8 *असन्नधीरनाकाङ्क्षी धर्मार्थकरणे नृप ॥ ८
स च किल कृतनिश्चयो द्विजाग्र्यो
भुजगपतिप्रतिदेशितार्थकृत्यः ।
यमनियमसमाहितो वनान्तं
परिगणितोञ्छशिलाशनः प्रविष्टः ॥ ९

इति श्रीमहाभारते शान्तिपर्वणि त्रिपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५३ ॥ समाप्तं मोक्षधर्मपर्व ॥

॥ समाप्तं शान्तिपर्व ॥

---

text ) पांडव; D9 lacuna ( for भारत ). — c ) K1 आसीद्वीर्येनहंकारी; K2.4 आसीद्वीर्यो ह्यनाकांक्षी; K6.7 D4.9 प्रसन्न( D9 om. प्रसन्न )धीरनाकांक्षी; V1 Bo.7-9 Da3.a4 Dn1.n4 Ds D2.3.5.7.8 Kumbh. ed. आसीद्धीरो ह्यनाकांक्षी; T1 G2.3.6 M1.7 असंनिधिरनाकांक्षी; T2 आसन्नधीरनाकांक्षी; M5 असन्नधीरं नाकांक्षी. — d ) Da3.a4 यथार्थ- ( for धर्मार्थ- ). K4 Dn4 G2.3.6 M1.5.7 -करणो; K7 D4.9 -कुशलो; T2 -करणं ( for 'णे ). K4 मम; V1 D4.9 नृपः.

9 B6 missing ( cf. v. l. 2 ). — a ) K1.2.4 T1 G3.6 द्विजोभूद्; K6 V1 Bo G2 M1.7 द्विजातिर्; B7-9 Dn1.n4 Ds D2.3.8 T2 M5 Kumbh. ed. द्विजो ( for द्विजाग्र्यो ). — b ) K6 V1 Bo.7-9 Dn1.n4 Ds D2.3.8 Kumbh. ed. -प्रतिदेशितात्मकृत्यः; K7 -प्रतिदिशितार्थ°; D5.7 T G3.6 M5 -प्रतिदर्शितार्थकृत्यः ( D5 °तप्रकृत्यः; T2 °तार्थकृत्यं ) ( for -प्रतिदेशितार्थकृत्यः ). — 9cd is damaged in B7. — c ) Bo D7 T1 G3.6 शम- ( for -यम- ). K1 वनांते; Bo वनांतरं; T2 मनांतं; G2 वनांत- ( for वनान्तं ). K6 B8.9 Da?.a4 Dn1.n4 Ds D2.3.8 Kumbh. ed. -सहो ( Da3.a4 -गतो; Dn1 -समो ) वनांतरं; D5.7 सहितो वनांते; T1 G3.6 -समाधिनो वनांतं ( for -समाहितो वनान्तं ). — d ) Da3 T1 G2.3.6 M1.5.7 -सिलाशनः; Ds1 -शिलाव्रातः ( for -शिलाशनः ). K7 D4.5.7.9 परिगणितोंछशिलो ( K7 'शिला ) मुनिः प्रवि( D5.7 'दि )ष्टः; Bo परिगणितः सदा बभूव; T2 परिगदितोंछाशिलाजन-प्रदिष्टः.

Colophon. Ś1 B6 D6 G1 M6 missing: K3.5 B1-5 Da1.a2 Dn2.n3 D1 G4.5 M2-4 absent. — *Sub-parvan :* K1.2.4.6.7 V1 B7-9 Da3.a4 Dn4 Ds D2-5.7-9 T G2.3.6 M1.5.7 मोक्षधर्म. — *Adhy. name :* K1.2.4.6.7 V1 Bo.7.8 Da4 Ds D2-5.8.9 M7 उंछवृत्त्युपाख्यानं समाप्तं; B9 Da3 उंछाशि( Da3 °सि )लोपाख्यानं समाप्तं; Dn1 D7 T1 G2.3.6 M1 उंछवृत्त्युपाख्यानं; M5 उंछव्रतकरणं. — *Adhy. no.* ( figures, words or both ): B7 187; B8 261; Dn1 T1 G6 191; Dn4 190; Ds2 193; D7 G3 192; D8 185; T2 G2 14; M1.5.7 188; M5 ( *inf. lin.* ) 224. — *Śloka no.:* Da4 Dn1.n4 Ds 9.

After the last colophon, K1 concludes with:

समाप्तं श्रीमाश्रामी मोक्षधर्माः ॥ एषामनु दानधर्माः ॥ एषामयं प्रतिसंधिः । श्री धि रः

श्रमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति कृत्वेदमीदृशम् ॥ इति ।
मोक्षधर्मेषु संख्यानां *** तत्त्वबुद्धिना ।
अध्यायानां शतं प्रोक्तमेकसप्तति( १७१ )संयुतम् ॥
शान्तिपर्वण्यपि तथा संख्यानां मुनिरब्रवीत् ।
पर्वण्यत्र परिज्ञेयमध्यायानां शतत्रयम् ।
त्रिंशश्चैव तथाध्याया नव चैव ( ३३९ ) तथापरे ॥
चतुर्दश सहस्राणि तथा नव शतानि च ।
षष्टिश्चैव तथा श्लोकाः ( १४९६० ) पर्वैतत्परिकीर्तितम् ॥
द्वादशं पर्व निर्दिष्टमेतत्प्राज्ञा जनप्रियम् ।
यच्छ्रुत्वा पुरुषः सम्यक्सर्वज्ञत्वमवाप्नुयात् ॥
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ।
शान्तिपर्वण्यधिगते हविष्यं भोजयेद्द्विजान् ॥
मोक्षधर्मेषु वृत्तान्ताः कथिताः पञ्चसप्ततिः ।

मोक्षधर्मेष्वमी वृत्तान्ताः । प्रसनेजिद्गीताः । पितापुत्रसंवादः । शाम्यकगीताः । मङ्किगीताः । प्रह्लादजनकसंवादः । सृगालकश्यपसंवादः । कर्मास्तिक्यम् । भृगुभरद्वाजसंवादः । आचारविधिः । अध्यात्मम् । जापकोपाख्यानम् ॥ १० ॥ मनुबृहस्पतिसंवादः । सर्वभूतोत्पत्तिः । दिशास्वस्तिकम् । अन्तर्भूमिविक्रीडनम् । वार्ष्णेयाध्यात्मम् । पञ्चशिखवाक्यम् । दान्ताध्यायः । अमृतप्राशिकम् । शक्रप्रह्लादसंवादः । श्रीवासवसंवादः ॥ २० ॥ श्रीसंनिधानम् ।

शक्रनमुचिसंवादः । पुनर्वासवबडिसंवादः । श्रीवासवसंवादः । जैगीषव्यासितसंवादः । केशवोग्रसेनसंवादः । शुकानुप्रश्नम् । मृत्युप्रजापतिसंवादः । धर्मलक्षणम् । तुलाधारजाजलिसंवादः । ॥ २० ॥ विचख्नुगीताः । चिरकारिकोपाख्यानम् । धुमत्सेनसत्यवतीसंवादः । मण्डव्यजनकसंवादः । विदेहगीताः । वृत्रगीताः । श्वत्रगीताः । गोकपिलीयम् । भाण्डाधारोपाख्यानम् । यज्ञनिष्ठा । चातुष्प्राशिकम् । नारदासितसंवादः । मण्डव्यजनकसंवादः । विदेहगीताः । वृत्रगीताः । वृत्रवधः । ज्वरोत्पत्तिः । दक्षप्रोक्तः स्तवो महेश्वरस्य । पाञ्चभौतिकम् । समंगनारदसंवादः । भवभार्गवसंवादः । पराश्रेयो । शक्राचरितम् । नारदगालवसंवादः । सगरारिष्टनेमिसंवादः । भवभार्गवसंवादः । पराशरगीताः । हंसगीताः । योगविधिः । सांख्यप्रशंसा । वसिष्टकरालजनकसंवादः । जानक्यानुशासनम् । याज्ञवल्क्यजनकसंवादः । पञ्चशिखजनकसंवादः । सुलभाजनकसंवादः । जावकाध्यायः । कर्ममूलम् । शुकोत्पत्तिः । शुकपतनम् । नारायणीयम् । उञ्छवृत्त्युपाख्यानम् ॥ समाप्ताश्चामी मोक्षधर्माः । शुभमस्तु सर्वबान्धवानां कल्पान्तमस्ति ॥ ॐ नमो गुरवे सरस्वतीरूपाय नमः । शान्तिपर्व समाप्तं ।

K2 concludes with :

समाप्ताश्चामी मोक्षधर्माः । एषामनु दानधर्माः । एषामयं प्रतिसंधिः ।

श्रीयुधिष्ठिरः ।

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् । इति ॥
मोक्षधर्मेषु संख्यानं कथितं तत्त्वबुद्धिना ।
अध्यायानां शतं प्रोक्तमेकसप्तति( १७१ )संयुतम् ॥
शान्तिपर्वण्यपि तथा संख्यानं मुनिरब्रवीत् ।
पर्वण्यत्र परिज्ञेयमध्यायानां शतत्रयम् ।
त्रिंशच्चैव तथाध्याया नव चैव ( ३३९ ) तथापरे ।
चतुर्दश सहस्राणि तथा नव शतानि च ।
षष्टिश्चैव तथा श्लोकाः ( १४९६० ) पर्वैतत्परिकीर्तितम् ॥
द्वादशं पर्व निर्दिष्टमेतत्प्राज्ञजनप्रियम् ।
यः श्रुत्वा पुरुषः सम्यक्सर्वज्ञत्वमवाप्नुयात् ।
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ।
शान्तिपर्वण्यधिगते हविषं भोजयेद्द्विजान् ॥
मोक्षधर्मेषु वृत्तान्ताः कथिताः पञ्चसप्ततिः ।

श्रीमोक्षधर्मेष्वमी वृत्तान्ताः । भीजिद्गीताः । पितापुत्रसंवादः । शाम्यकगीताः । प्रह्लादजनकसंवादः । शृगालसंवादः । कर्मास्तिक्यं । भृगुभरद्वाजसंवादः । आचारविधिः । आध्यात्मकं । जापकोपाख्यानं । मनुबृहस्पतिसंवादः । सर्वभूतोत्पत्तिः । दिव्यास्तिकं । अन्तर्भूमिविक्रीडनं । वार्ष्णेयाध्यात्मं । पञ्चशिखावाक्यं । दान्ताध्यायः । अमृतप्राशिकं । शक्रप्रह्लादसंवादः । बलिवासवसंवादः । श्रीमच्छिदानं । द्विमत्सीनसतिवतीसंवादः । गोकविलेयः ।

काण्डादारोपाख्यानं । शक्रनमुचिसंवादः । पुनर्वासवबलिसंवादः । श्रीवासवसंवादः । शुकानुप्रश्नः । मृत्युप्रजापतिसंवादः । धर्मलक्षणं । तुलाधारजाजलिसंवादः । निचानुगीताः । चिरकारिकोपाख्यानं । यज्ञनिष्ठा । चतुष्प्राशिकं । नारदासितसंवादः । विदेहगीताः । वृत्रगीताः । वृत्रवधः । ज्वरोत्पत्तिः । महारुद्रस्तवराजः । पाञ्चभौतिकं । सङ्गमनारदसंवादः । शक्रचरितं । नारदगालवसंवादः । सागरारिष्टनेमिसंवादः । भवभार्गवसंवादः । पराशरगीताः । हंसगीताः । योगविधिः । शुकाभिपतनं । जानक्यानुशासनं । याज्ञवल्क्यजनकसंवादः । पञ्चशिखजनकसंवादः । सुलभाजनकसंवादः । कर्ममूलं । शुकोत्पत्तिः । जैगीषव्यासितसंवादः । नारायणीये । उञ्छवृत्त्योपाख्यानं । समाप्ताश्चामी मोक्षधर्माः । श्रीरामाय नमः ।

राम रामेति रामेति रमे रामे मनोरमे ।
सहस्रनाम तत्तुल्यं रामनाम वरानने ॥

मोक्षधर्म पत्राणि २७७, सहस्रं ७०००, शतं ५००.

K4 concludes with :

समाप्ताश्चामी मोक्षधर्माः । एषामनु दानधर्माः । एषामयं प्रतिसंधिः ।

श्रीयुधिष्ठिर उवाच ।

ॐ शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति कृत्वेदमीदृशम् ॥ इति
मोक्षधर्मेषु संख्यानं कथितं तत्त्वबुद्धिना ।
अध्यायानां शतं प्रोक्तमेकसप्तति( १७१ )संयुतम् ॥
शान्तिपर्वण्यपि तथा संख्यानं मुनिरब्रवीत् ।
पर्वण्यत्र परिज्ञेयमध्यायानां शतत्रयम् ॥
त्रिंशच्चैव तथाध्याया नव चैव ( ३३९ ) तथा परे ।
चतुर्दश सहस्राणि तथा नव शतानि च ॥
षष्टिश्चैव तथा श्लोकाः ( १४९६० ) पर्वैतत्परिकीर्तितम् ।
द्वादशं पर्व निर्दिष्टमेतत्प्राज्ञजनप्रियम् ॥
यः श्रुत्वा पुरुषः सम्यक्सर्वज्ञत्वमवाप्नुयात् ।
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ॥
शान्तिपर्वण्यधिगते हविष्यं भोजयेद्द्विजान् ।
मोक्षधर्मेष्वमी वृत्तान्ताः कथिताः पञ्चसप्ततिः ।

प्रसेनजिद्गीताः । पितापुत्रसंवादः । शम्पाकगीता । मङ्किगीताः । प्रह्लादजनकसंवादः । सृगालसंवादः । कर्मास्तिक्यं । भृगुभरद्वाजसंवादः । आचारविधिः । अध्यात्मकं । जापकोपाख्यानं । मनुबृहस्पतिसंवादः । सर्वभूतोत्पत्तिः । दिव्यास्तिक्यं । अन्तर्भूमिविक्रीडनं । वार्ष्णेयाध्यात्मं । पञ्चशिखवाक्यं । दान्ताध्यायः । अमृतप्राशिकं । शक्रप्रह्लादसंवादः । शक्रनमुचिसंवादः । पुनर्वासवबलिसंवादः । श्रीवासवसंवादः । जैगीषव्यासितसंवादः । केशवोग्रसेनसंवादः । शुकानुप्रश्नं । मृत्युप्रजापतिसंवादः । धर्मलक्षणं । तुलाधारजाजलिसंवादः । विचख्नुगीता ।

चिरकारिकोपाख्यानं । बलिवासवसंवादः । श्रीसंनिधानम् । द्विमत्सीनसत्यवतीसंवादः । गोकपिलेयं । भाण्डादारोपाख्यानं । यज्ञनिष्ठा । चातुष्प्राश्निकं । नारदासितसंवादः । विदेहगीता । वृत्रगीताः । वृत्रवधः । ज्वरोत्पत्तिना । महारुद्रस्तवराजः । पाञ्चभौतिकं । मङ्कमनारदसंवादः । शक्रचरित्रं । नारदगालवसंवादः । सगरारिष्टनेमिसंवादः । भवभार्गवसंवादः । पराशरगीता । हंसगीताः । योगविधिः । मङ्कप्रशंसा । वसिष्टकरालजनकसंवादः । जानक्यानुशासनं । याज्ञवल्क्यजनकसंवादः । पञ्चशिखजनकसंवादः । सुलभाजनकसंवादः । यावकाध्यायः । कर्ममूलं । शुकोत्पत्तिः । शुकाभिपतनं । नारायणीयं । उञ्छवृत्त्युपाख्यानं । समाप्ताश्चामी मोक्षधर्माः ।

शुभमस्तु सर्वजगतां परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु शान्तिं सर्वत्र सुखी भवन्तु लोकाः ।

मोक्षधर्मेषु पत्राणि १८५ श्री नारायणाय नमः ॥

K8 concludes with :

समाप्तः मोक्षधर्मः । संवत् १८५२ ज्येष्ठवदि ६ रविवासरे लिखितं मिश्रराधाकृष्ण गोपालगढमध्ये श्रीरस्तु ॥ शुभं भूयात् ॥

K7 concludes with :

मोक्षधर्मेषु च समाप्तः ।

समाप्ते मोक्षधर्मे च वाचकं पूजयेत्सुधीः ।
हिरण्यं धेनुवासांसि वाचकाय प्रदापयेत् ॥
न पूजयति यो मोहाच्छ्रुत्वा धर्मानशेषतः ।
सोऽन्यजन्मनि राजेन्द्र अन्धो मूकश्च जायते ॥

अतः परमधर्मो भविष्यति । यस्यायं प्रतिसंधिः ।

युधिष्ठिर उवाच ।

शमो बहुविधाकारस्त्वया प्रोक्तः पितामह ।
न च मे हृदये शान्तिरस्ति किंचित्त्वमीदृशीम् ॥

वृत्तान्तश्चात्र । सेनजिद्गीता । १ । पितापुत्रसंवादः । २ शम्याकगीता । ३ । प्रह्लादजनकसंवादः । ४ । शृगालकाश्यपसंवादः । ५ । आचारविधिः । ६ । अध्यात्म्यं । ७ । जापकोपाख्यानं । ८ । इन्द्रबृहस्पतिसंवादः । ९ । सर्वभूतोत्पत्तिः । १० ॥ दिशां स्वस्तिकं । ११ । अन्तर्भूतक्रीडितं । १२ । वार्ष्णेयाध्यात्मं । १३ । पञ्चशिखवाक्यं । १४ । दान्तोध्यायः । १५ । अमृतप्राशिकं । १६ । शक्रप्रह्लादसंवादः । १७ । नारदोग्रसेनसंवादः । १८ । शुकानुप्रश्नः । १९ । मृत्युपूजा । २० ॥ मतिसंवादः । २१ । धर्मलक्षणं । २२ । धर्माचारः । २३ । तुलाधारजाजलिसंवादः । २४ । चिरकापिकोपाख्यानं । २५ । द्युमत्सेनसंवादः । २६ । गोकापिलीयं । २७ । कुण्डधारः । २८ । यज्ञनिन्दा । २९ । चातुःप्रश्निकः । ३० ॥ माण्डव्यजनकसंवादः । ३१ । पुनरपि हारीतगीता । ३२ । वृत्रवधः । ३३ । वृत्रगीता । ३४ । दक्षप्रोक्तस्तवो महेश्वरस्य । ३५ । पाञ्चभौतिकं । ३६ । श्रेयोवाचीकं । ३७ । सुमंगगीता । ३८ । सुमंगनारदसंवादः । ३९ । भवभार्गवसंवादः । ४० ॥ योगविधिः । ४१ । सांख्यप्रशंसा । ४२ । वसिष्ठकरालजनकसंवादः । ४३ । पावकाध्यायः । ४४ । कर्मपूलिकाध्यायः । ४५ । शुकोत्पत्तिः । ४६ । शुकातिपतनं । ४७ । नरनारायणीयं । ४८ । उञ्छवृत्त्युपाख्यानं । ४९ । एते****धर्मोक्ताः ।

गोब्राह्मणेभ्यो शिवमस्तु नित्यं
लोकाः समस्ताः सुखिनो भवन्तु ।
स्वस्ति प्रजाभ्यः परिपालयन्तां
****** *** * शाः ॥

शिवमस्तु**जगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र सुखी ***** ॥

संवत् १७१६ मार्गसीरसुदी ५ भौमे मदनेन लिषितोयं ग्रंथः जानी त्रिलोचनपठनार्थं परोपकारार्थम् ॥

V1 concludes with :

समाप्तोऽयं मोक्षधर्म इति । लसं ४१२ कार्तिकशुक्लषष्ठ्यां गुरौ ए दिने कृष्णपल्लीग्रामे परमभागवतमर्यादासिंधुचक्षवग्रामस्थायीमहाशयानामाज्ञया सद्बुद्ध्या लक्ष्मीधरेण लिखितमिदं मोक्षधर्मपुस्तकमिति ।

आदर्शदोषान्मतिविक्रमाद्वा
[त्व]राविशेषाल्लिखनस्य वेगात् ।
यदत्र शुद्धं तदशुद्धवर्तुं (sic)
क्षमन्तु सन्तः खलु लेखकस्य ॥
बर्हापीतनटवरवधुः**कार्तकारं विप्रदासः
कनककपिशं वैजयन्तीं च दामान् ।
विप्राधेनोवधबश्यधया प्रेक्षणोपछन्दैः
छन्दबर्हस्वपदवमलं प्राविशद्गीतकीर्तिः ॥

शुभं ॥ संवत १६१८ पौषशुक्लपञ्चम्यां तिथौ ए दिने महाराजाधिराज श्री श्रीजयप्रतापमल्लदेवेन राजधर्ममोक्षधर्मपारायणायैतत्कृतः पञ्चदशदिनान्तरे संपूर्णकृतः ॥

Bo concludes with :

युधिष्ठिर उवाच ।

समो बहुविधाकारः *क्षु भक्तः पितामहः ।
न च मे हृदये शान्तिरस्ति कृत्वेदमीदृशम् ॥ इति ।

ॐ नमो नारायणाय ॥ श्रीरामचन्द्राय नमः । श्री कृष्णाय नमः ॥ श्री श्रीरामः शुभमस्तु शकाब्दाः १५९९ ॥ श्रीराधाकृष्णाभ्यां नमः ॥ श्रीरस्तु मयि लेखके ॥

B7 concludes with :

समाप्तश्चायं मोक्षधर्मः । शान्तिपर्व च ।
अस्यानन्तरमनुशासनपर्व भविष्यति । यस्यायमाद्यः श्लोकः ॥

युधिष्ठिर उवाच ।

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥

तत्सत् । मोक्षधर्मेऽध्यायाः १८९ ॥ ****** शुभमस्तु । शकाब्दाः १६५९ ॥ तैरिखश्चैत्रः ॥ श्री शिवप्रसादशर्मणः श्री कृष्णाय नमः ॥ श्री रामः ॥

B8 concludes with :

समाप्तश्चायं मोक्षधर्म इति । अस्यानन्तरं दानधर्मो भविष्यति । तस्यायमाद्यश्लोकः ।

युधिष्ठिर उवाच ।

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥

शुभमस्तु । शकाब्दा १६६६ (1669) सौरवैशाखस्य ऊनविंशतिदिवसे श्रीरामनाथशर्मणा ग्रन्थोऽयमलेखि स्वार्थमिति । ॐ नमो गुरवे । तत्राध्यायाः 339 श्लोकाः 147251.

B9 concludes with :

समाप्तश्चायं मोक्षधर्मः । अस्यानन्तरमानुशासनिकं पर्व भविष्यति । यस्यायं प्रतिसंधिर्भवति ।

युधिष्ठिर उवाच ।

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥

शकाब्दाः १७०२ ॥ ० ॥

शाके युगाकाशमणीन्दुयुक्ते
मीनस्थमित्रस्य मणिद्विपक्षे ।
श्रीरामकान्तेन रसाभरेणा
लेखि क्षितीशस्य तु मोक्षधर्मः ॥

Da3 concludes with :

समाप्तश्चायं मोक्षधर्म इति ॥

Da4 concludes with :

समाप्तश्चायं मोक्षधर्मः ॥ श्रीगोपीजनवल्लभाय नमः ॥

Dn1 concludes with :

समाप्तं चेदं शान्तिपर्व ।
अस्यामानुशासनिकं पर्व भविष्यति । तस्यायमाद्यः श्लोकः ।

युधिष्ठिर उवाच ।

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥

श्रीमत्कुलदेवतापादारविंदार्पितमस्त्विदं पुस्तकं । शाके १६९१ विरोधिवर्षेऽस्ये मासि बहुले पक्षके तिथौ पञ्चम्यां भार्गवे वारे लिखितं पुस्तकं त्विदं बालकृष्णेनेति शेषः । ग्रंथसंख्या १६८००.

Dn4 concludes with :

श्रीरस्तु ॥ शुभं भवतु ॥

Ds2 concludes with :

अस्यानन्तरमानुशासनिकं पर्व । तस्यायमाद्यः श्लोकः ।

युधिष्ठिर उवाच ।

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥

D2 concludes with :

शुभमस्तु ॥

D3 concludes with :

शुभमस्तु । अस्मात् आनुशासनिकं पर्व भविष्यति । तस्यायमाद्य. श्लोकः ।

युधिष्ठिर उवाच ।

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥

संवत् १६६८ समये चैत्रशुदि पञ्चमी शनिवासरे ॥

D4 concludes with :

समाप्तोऽयं मोक्षधर्मः ।

श्रुतेषु मोक्षधर्मेषु वाचकं पूजयेत्सुधीः ।
हिरण्यैश्चैव वासोभिरन्नैश्च विविधैस्तथा ॥

अतः परं दानधर्मा भविष्यंति । तस्यायमाद्यः श्लोकः ।

युधिष्ठिर उवाच ।

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥

वैशंपायन उवाच ।

अस्मिन्धर्मेऽमी वृत्तान्ताः । पितापुत्रसंवादः । शम्पाकगीता । प्रह्लादजनकसंवादः । आचारविधिः । अध्यात्मं । जापकोपाख्यानं । इन्द्रबृहस्पतिसंवादः । सर्वभूतोत्पत्तिः । निशास्वस्तिकं । वार्ष्णेयाध्यात्म्यं । पञ्चशिखवाक्यं । दान्ताध्यायः । अमृतप्राशिकं । शक्रप्रह्लादसंवादः । बलिवासवसंवादः । श्रीःसंनिधानं । श्रीवासवसंवादः । बलिवासवसंवादः । जैगीषव्यासितसंवादः । नारदोग्रसेनसंवादः । शुकानुप्रश्नं । आचारनिर्देशः । धर्मलक्षणं । धर्माचारः । तुलाधारजाजलिसंवादः । गीताविकारिकोपाख्यानं । द्युमत्सेनसंवादः । गोकापिलीयं । कुण्डधारोपाख्यानं । यज्ञनिंदा । आनुप्राशिकः । माण्डव्यजनकसंवादः । वामविधिः ।

सांख्यप्रशंसा । वसिष्ठकरालजनकसंवादः । जानुशासनं । याज्ञवल्क्यजनकसंवादः । सुलभाजनकसंवादः । पावकाध्यायः । कर्ममूर्तिकोऽध्यायः । शुकोत्पत्तिः । शुकानुपतनं । नरनारायणीयं । उञ्छवृत्त्युपाख्यानमिति एतद्वृत्तान्ताः ।

शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु नाशं सर्वत्र जनः सुखी भवतु ॥

D6 concludes with :

समाप्तोऽयं मोक्षधर्मः ॥ श्री ॥

D7 concludes with :

श्री अपीतकुचनायकीसमेतश्रीअरुणाचलेश्वरार्पणमस्तु । श्रीवेदव्यासार्पणमस्तु । श्रीः ॥ इति श्रीशान्तिपर्व समाप्तं ॥

सरभसकृतवेगभ्रष्टवर्णादिदोषो
यदिह भवति शास्त्रे पुस्तके हस्तदोषात् ।
सकलमपि कृतान्तं सद्गुणग्राहकानां
करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ॥ भा ३२ ॥

D8 concludes with :

पर्वण्यत्र परिज्ञेयमध्यायानां शतत्रयम् ।
विंशच्चैव च अध्याया नव ( ३२९ ) चैव तपोधन ॥ १ ॥
चतुर्दश सहस्राणि तथा सप्त शतानि च ।
सप्त श्लोकास्तथैवान्ये (१४७०७) पाराशर्येण सख्यया ॥ २
श्रुत्वा पर्वमिदं पुण्यं वाचकं पूजयेत्ततः ।
गोरथाश्वैश्च वस्त्रैश्च हेमालंकारभूषणैः ॥ ३ ॥
पूजितं वाचिकं येन विष्णुस्तेनाभिपूजितः ।
श्रुतं पूर्णफलं तस्य वाचिकं पूजिते सति ॥ ४ ॥
यस्त्विमां पृथिवीं दद्यान्मेरुसागरसंमिताम् ।
तत्पुण्यं जायते तेषां श्रुत्वा पर्वमिदं शुभम् ॥ ५ ॥
यो ददाति शुभं पत्रं शान्तिकं विधिपूर्वतः ।
यावदक्षरपंक्तिश्च स्वर्गलोके वसेच्चिरम् ॥ ६ ॥
सर्वशास्त्रस्य संदोहं श्रुतिस्मृतिसमुच्चयम् ।
एतत्पुण्यं महापर्व व्यासेन परिकीर्तितम् ॥ ७ ॥
यः शृणोति नरो भक्त्या सर्वपापैः प्रमुच्यते ।
श्लोकं श्लोकार्धपादं वा शृणुयादनुदिने नरः ॥ ८ ॥
सर्वपापविमुक्तो हि विष्णुलोके महीयते ।
इत्येते शान्तिपर्वणि धर्मत्रयेण वर्णनम् ॥ ९ ॥
शाकगकलाशनमासमन्ते रसशरविदः ।
शालिवाहन वर्तन्त शाकऽब्दन्न्यूनत्रयम् ॥ १ ॥
वेदमासमसोदग्गं शुक्लपक्षोत्तरायणे ।
गुरुवारेऽभवत्पूर्णं लेखनं शान्तिपर्वणि ॥ २ ॥

वयं पुस्तकभारतः श्रमहरमत्यादरं लेखनं
शान्तिः पर्व सुधारहस्यसुनतिं गृह्णामि स्वस्ताक्षरे ।
ग्रन्थं पूर्णकृतं त्वयार्पितविभोः संगृह्यतां संग्रहं
मामेवं सह रक्षणीय कुरुतमित्येव विज्ञापना ॥ १ ॥

अस्यानन्तरमनुशासनपर्व भविष्यति । तस्यायमाद्यः श्लोकः ।

युधिष्ठिर उवाच ।

शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥

D9 concludes with :

समाप्तश्च मोक्षधर्मः ।

समाप्ते मोक्षधर्मेषु लेखकं पूजयेत्सुधीः ।
हिरण्यं वापि वासांसि याचकाय प्रदापयेत् ॥
न पूजयति यो मोहाच्छ्रुत्वा धर्मानशेषतः ।
सोऽन्यजन्मनि राजेन्द्र अन्धो मूकश्च जायते ॥
अतः परं दानधर्मो भविष्यति । यस्यायं प्रतिनिधिः ।
युधिष्ठिरोवाच ॥ ( 277. 12. 48 ) श्लोकाः ७८१२.

G2 concludes with :

शुभमस्तु ॥

G3 concludes with :

हरिः ॐ ॥ श्रीवेदव्यासाय नमः । मोक्षधर्मः समाप्तः ॥ श्रीरुक्मिणीसत्यभामासमेतश्रीराजगोपालकृष्णाय नमः ॥ अलमेलुमंगासमेतश्रीवेंकटेश्वराय नमः ॥ सीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेतश्रीरामचन्द्राय नमः ॥ श्रीमहागणाधिपतये नमः ॥ स्वस्तिश्रीनृपशालिवाहनशके १६१६ वर्तमाने ईश्वरनामसंवत्सरे ग्रीष्मऋतौ आषाढमासे कृष्णपक्षे २० गुरुवासरे पुष्यनक्षत्रे वज्रनामयोगे नागवाकरणे एतस्मिञ्शुभदिने दक्षिणद्वारकाक्षेत्रे राजगोपालस्वामिसंनिधौ राजश्रीदामोदरपण्डितप्रभुवर्याज्ञापनया लिखितं ॥ इदं शान्तिपर्व शिंगरिणा लिखितं ॥

करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।

लेखकपाठकयोः शुभं भवतु ॥ श्रीभवानीशंकराय नमः ॥ श्रीपार्वतीपरमेश्वराय नमः ॥ श्रीकालभैरवाय नमः ॥ श्रीउमामहेश्वराय नमः ॥

सेनजिद्गीतं । पितापुत्रसंवादं । शम्यकगीतं । मङ्किगीतं । प्रह्लादाजगरसंवादं । इन्द्रकाश्यपसंवादं । भृगुभरद्वाजसंवादं । आचारविधिः । अध्यात्मकथनं । ध्यानयोगं । जापकोपाख्यानं । मनुबृहस्पतिसंवादं । कृष्णमाहात्म्यं । दक्षप्रजापतिसंभवं । अवतारप्रयोजनं । अनुस्मृतिः । गुरुशिष्यसंवादं । पञ्चशिखजनकसंवादं । इन्द्रप्रह्लादसंवादं । बलिवासवसंवादं । इन्द्रनमुचिसंवादं । पुनर्बलिवासवसंवादं । श्रीवासवसंवादं । जैगीषव्य-

देवलसंवादं । उग्रसेनकेशवसंवादं । शुकानुप्रश्नं । मृत्यूत्पत्तिः । धर्मप्रश्नं । तुलाधारजाजलिसंवादं । विचख्युगीतं । चिरकारिकोपाख्यानं । द्युमत्सेनसत्यजित्संवादं । कपिलगोसंवादं । कुण्डधारोपाख्यानं । नारददेवलसंवादं । विदेहराजगीतं । हारीतगीतं । वृत्रासुरगीतं । वृत्रासुरवधं । ज्वरोत्पत्तिकथनं । नारदस्वगमसंवादं । नारदगालवसंवादं । अरिष्टनेमिसगरसंवादं । पराशरजनकसंवादं । हंससाध्यसंवादं । योगकथनं । सांख्यकथनं । वसिष्ठकराळसंवादं । जनककुमारऋषिसंवादं । याज्ञवल्क्यजनकसंवादं । पुनः पञ्चशिखजनकसंवादं । सुलभाजनकसंवादं । शुकानुशासनं । शुकोत्पत्तिः । शुकजनकसंवादं । व्यासशुकसंवादं । नारदशुकसंवादं । शुकाभिपतनं । नारायणीयं । नारायणनारदसंवादं । उपरिचरवसुपतनं । नारदस्तोत्रं । भगवद्दर्शनं । जन्मरहस्यं । व्यासशिष्यसंवादं । नामनिरुक्तिः । पुनर्नारायणनारदसंवादं । हयशिरोपाख्यानं । व्यासपूर्वजन्मकथनं । ब्रह्मरुद्रसंवादं । नारायणीयसमाप्तं । अतिथिब्राह्मणसंवादं । नागीब्राह्मणसंवादं । नागीनागसंवादं । नागब्राह्मणसंवादं । उञ्छवृत्त्युपाख्यानं । इत्युपाख्यानपरंपरा ॥

G8 concludes with:

हरिः ॐ ॥ शुभमस्तु ॥

करकृतमपराधं क्षन्तुमर्हन्ति सन्तः ।

"विश्वावस्वब्दे कटकमासे २३ दिने मध्यार्जुनं शेषप्पय्यार्णां सरस्वतीकोशार्थे तेप्पेरुमान्शुरुमुत्तानै (नाम्ना) लिखितं शान्तिपर्वं मोक्षधर्मं संपूर्णं" (in Grantha characters) ॥

श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्सेवितश्रीरामार्पणमस्तु ॥
अन्ते च पत्रे लेखनार्थं स्वीकृतस्य धनस्य क्रमो दर्शितः । स द्राविड्यां लिखितः संस्कृते परिवर्तितः एवं भवति—

"क्रोधिवत्सरे तुलामासे २५ दिने श्रीशेषार्याणां सरस्वतीकोशार्थे ग्रन्थलेखनार्थं स्वीकृतस्य धनस्यायं क्रमः—

तुलामासे मुत्ताभाने (= मातामहाय) निवेद्य निबन्धनाधनत्वेन सनियममापणिकेन दापितं [धनं] वराहन् ४, पणं ३ । वृश्चिकमासे वराहन् ५। धनुर्मासे वराहन् ३। मकरमासे वराहन् २। आहत्य षाष्टिके (= धान्यकाले) वितीर्णं [धनं] वराहन् १४, पणं ३ । [१० पण = १ वराहन् or सुवर्ण.]

मीनमासे शालिधान्य[काले] वराहन् १५, पणं० । —आहत्य वराहन् २९, पणं ३ । एतद्धनं विना अण्णाशास्त्रिणामृणार्थे आर्येण आश्रुतं वराहन् ६, पणं ५ । —आहत्य वराहन् ३५, ८ । इत्थं अष्टपणाधिके पञ्चत्रिंशत्सुवर्णे ॥

[काशिवशे वितीर्णं वराहन् १५, पणं ९ विहाय [शिष्टं] अस्मद्भ्रातृमुत्तानै वशे वितीर्णं वराहन् १९, पणं ९.]

मकरमासे अय्यनाज्ञया मुत्ताभानेन मुत्तानै वशे वितीर्णं पणं २५ । आहत्य मुत्तानै वशे वितीर्णं वराहन् २२, पणं ४ ।

शालिधान्ये [धान्यकाले] अय्यनाज्ञया नोट्टंमुत्तुना दत्तं वराहन् ६ ।

पराभववत्सरे वृषभमासे २५ दिने वैवाहिकचेलार्थे पणं १४ कन्याचेलार्थे पणं ६ । आहत्य मुत्तानै वशे वितीर्णं वराहन् ३०, पणं ४." ]

M1 concludes with:

शान्तिपर्वं समाप्तं । "१०२१ कोल्लवर्षे शनौ मकरराशिस्थे गुरौ मेषस्थे रवौ कन्याराशिं गते कन्यामासे २२ तम दिने सोमवासरे ज्येष्ठानक्षत्रे शुक्लषष्ठ्यां वणिक्करणयुतशुभसमये नेल्लुवायवारियत्त (family name) कृष्णेन लिखितं मोक्षधर्मं समाप्तम्" (in Malayālam characters) ॥

M5 concludes with:

कर्मणा मनसा वाचा या चेष्टा मम नित्यशः ।
केशवाराधने सा स्याज्जन्मजन्मान्तरेष्वपि ॥

कौसल्यासुत ताटकामत मखत्रातर्मुनिस्त्रीहित
छिन्नेश्वासन जानकीवृत वनावासिन्खराद्यन्तक ।
मारीचघ्न हनूमदिष्ट रविजार्तिच्छेद बद्धाम्बुधे
सेनाभ्रातृसमेतरावणरिपो सीतेष्ट रामाव माम् ॥

कृष्णः पूतनिकानिरस्तशकटो वातान्तकः पादप-
च्छेत्ता वत्सबकाभिजिद्धृतगिरिर्गोपीष्टदोऽरिष्टहन् ।
केशिघ्नो हतमल्लकः स यवनक्ष्माजातिरात्ताबला
साहस्त्रोऽर्जुनसारथिः कुरुबलं हत्वा ररक्ष क्षितिम् ॥

व्यासायाप्रतिमेतिहासरचनोल्लासाय दुर्वादिनां
त्रासायासकराय सत्सु कृतविश्वासाय दोषद्विषे ।
भासा यामुनरम्यतोयसदृशा या सायमा*सिने
दासायाभयदायिमध्वगुरुहृद्वासाय तुभ्यं नमः ॥

व्यासाय भवनाशाय श्रीशाय गुणराशये ।
हृद्याय शुद्धविद्याय मध्वाय च नमो नमः ॥

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावः ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥
मळञ्चेरियुटे (owner's name) ग्रन्थं । शुभमस्तु ।

श्रीमहाभारते शान्तिपर्वाद्य लिखितं मया ।
पूर्णत्रय्यालयेशात्मा प्रीयतां मे रमापतिः ॥

M7 concludes with:

मोक्षधर्मं समाप्तं । श्रीगुरुभ्यो नमः । शुभमस्तु ॥

Ca concludes with :

इति भारताचार्य-पाठकराज-श्रीमदीशानतनयस्य श्रीसत्यखानश्रीमानदत्ताश्रयस्य श्रीभारताचार्यश्रीमदर्जुनमिश्रस्य कृतौ महाभारतार्थदीपिकायां शान्तिपर्वणि मोक्षधर्मेषु उञ्छवृत्त्युपाख्यानं समाप्तम् । समाप्तं च मोक्षधर्मार्थविवरणम् ।

प्रागुपायस्य संशुद्धिर्मयाकारि यथामति ।
मोक्षधर्मार्थविवृतौ कः समर्थोऽस्ति संप्रति ॥ १
पितुः सदुपदेशेन विद्वन्मतानुरोधतः ।
प्राङ्निबन्धस्य संशुद्धौ कृतो यत्नोऽधुना मया ॥ २
अल्पाधीतिलिपिग्रस्तशुद्धाक्षरसमुच्चयः ।
विदुषां हेलया प्राच्यग्रन्थो नाशमुपेयिवान् ॥ ३
बुधैर्विमत्सरैरेव क्षन्तव्यं मम चापलम् ।
मूलग्रन्थोऽपि सोपायो लिपिदूषणभाग्यतः ॥ ४
गौडेश्वरमहामात्रश्रीमद्विश्वासरायतः ।
लब्धानुज्ञेन लिखिता मोक्षधर्मार्थदीपिका ॥ ५

Cn concludes with :

वेदान्ते लक्ष्मणार्यं क्रतुविधिविवृतौ तीर्थनारायणार्यं
तर्के धीरेशमिश्रान्फणिपतिभणितौ पोलगंगाधरार्यम् ।
वेदे साङ्गे पितृव्यं शिवमथ पितरं दक्षिणामूर्त्युपास्तौ
श्रौते चिन्तामणिं यः शरणमुपगतो भूम्नि गोपालदेवम् ॥ १
व्याकरोन्मोक्षधर्मान्स नीलकण्ठः समासतः ।
अनेन प्रीयतां देवो गिरिजापतिरव्ययः ॥ २

इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसश्रीगोविन्दसूरिसूनोः श्रीनीलकण्ठस्य कृतौ भारतभावदीपे मोक्षधर्मपर्वार्थप्रकाशे पञ्चषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६५ ॥ समाप्तेयं शान्तिपर्वटीका ॥ शुभमस्तु ॥ श्रीकृष्णार्पणमस्तु ॥

Cp concludes with :

इति श्रीमहाभारते परमानन्दभट्टाचार्यकृता मोक्षधर्मटीका समाप्ता ।

कृता श्रीपरमानन्दभट्टाचार्येण यत्नतः ।
श्रीमोक्षधर्मटीकेयं परमानन्ददायिनी ॥
शाके वेदनवेषुभूपरिमिते पक्षे तिथौ ***
गौर्या मन्ददिने व्यलीलिखदिदं श्रीसत्यदेवः सुधीः ।
पूर्वार्धं जलपोक्षरक्षसहिते मासे तपस्युत्तरा-
र्धं शीघ्रं सुखदेवपण्डितवरशिष्येण साकं शुभम् ।

शोधितमेतद्यथाप्रति स्वयमेव ॥

Cs ( 79 of A 1879-80 ) breaks off at 12. 353. 4. The Hyderabad MS. of the same concludes with :

उदञ्चदजयत्तनस्तबकमर्त्यकल्लोलिनीं
परागपरिपन्थिनीममृतबिन्दुनिष्यन्दिनीम् ।
अपारगुणगुम्फितामनिशमस्य विद्योदधे-
रुपासितविपश्चितस्मरणभारतीचातुरीम् ॥

श्रीमत्परमहंसपरिव्राजकाचार्य-अभयानन्दपूज्यपादशिष्येण आनन्दपूर्णमुनीन्द्रेण विद्यासागरापरनामधेयेन विरचितायां व्याख्यानरत्नावल्यां मोक्षधर्मटिप्पणिका समाप्ता ॥ इति मोक्षधर्माः समाप्ताः ॥

Cv concludes with :

हरि ॐ ॥ इति श्रीमन्महाभारते शतसहस्रिकायां संहितायां वैयासिक्यां शान्तिपर्वणि मोक्षधर्मे उञ्छवृत्त्युपाख्याने वादिराजतीर्थपूज्यचरणविरचितलक्षालंकाराख्यटीकायां एकद्विशततमोऽध्यायः । समाप्तं चेदं शान्तिपर्व ॥ हरिः ॐ ॥

# APPENDIX I ( cont. )

This Appendix comprises a series of additional passages found in different MSS. which were either too long to be included in the foregoing footnotes to the constituted text, or not sufficiently connected with the main thread of the narration, or were otherwise deemed not important enough for being included in the main critical apparatus.

The variants cited below these Appendix passages are of the same order as those cited below the additional (star) passages in the footnotes to the constituted text, so that, in both of them, corrupt readings, discrepant readings of single MSS., and minor variants are generally ignored, and obvious scribal errors silently corrected. Furthermore, the variants of the short prose formulaic references (such as संजय उवाच) have been uniformly ignored here.

As the sub-parvans of the Śāntiparvan are more or less self-contained units appealing to distinct classes of readers, the Appendix passages of the respective sub-parvans are given immediately after the conclusion of the text of that sub-parvan, rather than assembling them all together at the end of the text of the major parvan. — At the end of the Rājadharma, the first sub-parvan of the Śānti, were given Appendix passages 1-13 belonging to that sub-parvan, with the corresponding variants noted below. There being no Appendix passages to the second sub-parvan, the Āpaddharma, the present Mokṣadharma Appendix begins with No. 14.

## 14

After the initial ref. in 12. 199, Kumbh. ed. Cv ins.:

तदेव सततं मन्ये न शक्यमनुवर्णितुम् ।
यथानिदर्शनं वस्तु न शक्यमनुबोधितुम् ।
यथा हि सारं जानाति न कथंचन संस्थितम् ।
परकायच्छविस्तद्वद्देहेऽयं चेतनस्तथा ।
विना कायं न सा छाया तां विना कायमस्त्युत ।
तद्वदेव विना नास्ति प्रकृतेरिह वर्तनम् ।
इदं विना परं नास्ति नेदमस्ति परं विना ।
जीवात्मना त्वसौ छिन्नस्त्वेष चैव परात्मना ।
तत्तथेति विदुः केचिदतथ्यमिति चापरे ।
उभयं मे मतं विद्वन्मुक्तिहेतौ समाहितम् ।
विमुक्तैश्च मृगः सोऽपि दृश्यते संयतेन्द्रियः ।
सर्वेषां न हि दृश्यो हि तडिद्वत्स्फुरति ह्यसौ ।
ब्राह्मणस्य समादृश्यो वर्तते सोऽपि किं पुनः ।
विद्यते परमः शुद्धः साक्षिभूतो विभावसुः ।
श्रुतिरेषा ततो नित्या तस्मादेकः परो मतः ।
न प्रयोजनमुद्दिश्य चेष्टा तस्य महात्मनः ।
तादृशोऽस्त्विति मन्तव्यस्तथा सत्यं महात्मना ।
नानासंस्थेन भेदेन सदा गतिविभेदवत् ।
तस्य भेदः समाख्यातो भेदो ह्यस्ति तथाविधः ।
एवं विद्वन्विजानीहि परमात्मानमव्ययम् ।
तत्तद्गुणविशेषेण संज्ञानामनुसंयुतम् ।
सर्वेश्वरः सर्वमयः स च सर्वप्रवर्तकः ।
सर्वात्मकः सर्वशक्तिः सर्वकारणकारणम् ।
सर्वसाधारणः सर्वैरुपास्यश्च महात्मभिः ।
वासुदेवेति विख्यातस्तं विदित्वाश्नुतेऽमृतम् ।

## 15

After 12. 199, Kumbh. ed. Cv ins.:

युधिष्ठिर उवाच ।

पितामह महाप्राज्ञ दुःखशोकसमाकुले ।
संसारचक्रे लोकानां निर्वेदो नास्ति किं न्विदम् ।

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निबन्धनस्य संवादं भोगवत्या नृपोत्तम ।
मुनिं निबन्धनं शुष्कं धमनीयाकृतिं तथा ।
निरारम्भं निरालम्बमसजन्तं च कर्मणि ।
पुत्रं दृष्ट्वाप्युवाचार्ता माता भोगवती तदा ।
उत्तिष्ठ मूढ किं शेषे निरपेक्षः सुहृज्जनैः ।
निरालम्बो धनोपाये पैतृकं तव किं धनम् ।

निबन्धन उवाच ।

पैतृकं मे महन्मातः सर्वदुःखालयं त्विह ।
अस्त्येतत्तद्विघाताय यतिष्ये तत्र मा शुचः ।
इदं शरीरमत्युग्रं पित्रा दत्तमसंशयम् ।
तमेव पितरं गत्वा धनं तिष्ठति शाश्वतम् ।
कश्चिन्महति संसारे वर्तमानो धनेच्छया ।
वनदुर्गमभिप्राप्तो महत्क्रव्यादसंकुलम् ।
सिंहव्याघ्रगजाकारैरतिघोरैर्महाशनैः ।
समन्तात्सुपरिक्षिप्तं स दृष्ट्वा व्यथते पुमान् ।
स तद्वनं ह्यनुचरन्विप्रधावन्नितस्ततः ।
वीक्षमाणो दिशः सर्वाः शरणार्थं प्रधावति ।
अथापश्यद्वनं रूढं समन्ताद्वागुरावृतम् ।
वनमध्ये च तत्रासीदुदपानः समावृतः ।
वल्लिभिस्तृणसंछिन्नैर्गूढाभिरभिसंवृतः ।
स पपात द्विजस्तत्र विजने सलिलाशये ।
विलग्नश्चाभवत्तस्मिँल्लतासंतानसंकुले ।
बाहुभ्यां संपरिष्वक्तस्तया परमसत्त्वया ।
स तथा लम्बते तत्र ऊर्ध्वपादो ह्यधःशिराः ।
अधस्तत्रैव जातश्च जम्बूवृक्षः सुदुस्तरः ।
कूपस्य तस्य वेलाया अपश्यत्सुमहाफलम् ।
वृक्षं बहुविधं व्योमवल्लीपुष्पसमाकुलम् ।
नानारूपा मधुकरास्तस्मिन्वृक्षेऽभवन्किल ।
तेषां मधूनां बहुधा धारा प्रववृते तदा ।
विलम्बमानः स पुमान्धारां पिबति सर्वदा ।
न तस्य तृष्णा विरता पीयमानस्य संकटे ।
परीप्सति च तां नित्यमतृप्तः स पुनः पुनः ।
एवं स वसते तत्र दुःखिदुःखी पुनः पुनः ।

---

14

(L. 7) Kumbh. ed. वै*** नास्ति; Cv (gloss: परं, परलोकस्थदेवताकृपां विना पुण्यं, नास्ति) विना परं नास्ति.—(L. 8) Cv भिन्नस् (for छिन्नस्). Cv एष चैव परमात्मना (hypermetric) (for the post. half).

मया तु तद्धनं देयं तव दास्यामि चेच्छसि ।
तस्य च प्रार्थितः सोऽथ दत्त्वा मुक्तिमवाप सः ।
सा च त्यक्त्वार्थसंकल्पं जगाम परमां गतिम् ।
एवं संसारचक्रस्य स्वरूपज्ञा नृपोत्तम ।
परं वैराग्यमागम्य गच्छन्ति परमं पदम् ।

युधिष्ठिर उवाच ।

एवं संसारचक्रस्य स्वरूपं विदितं न मे ।
पैतृकं तु धनं प्रोक्तं किं तद्विद्वन्महात्मना ।
कान्तारमिति किं प्रोक्तं को हस्ती स तु कूपकः ।
किंसंज्ञिको महावृक्षो मधु वापि पितामह ।
एतं मे संशयं विद्धि धनशब्दं किमुच्यते ।
कथं लब्धं धनं तेन तथा च किमिदं त्विह ।

भीष्म उवाच ।

उपाख्यानमिदं सर्वं मोक्षविद्भिरुदाहृतम् ।
सुमतिं विन्दते येन बन्धनाशश्च भारत ।
एतदुक्तं हि कान्तारं महान्संसार एव सः ।
ये ते प्रतिष्ठिता व्याला व्याधयस्ते प्रकीर्तिताः ।
या सा नारी महाघोरा वर्णरूपविनाशिनी ।
तामाहुश्च जरां प्राज्ञाः परिष्वक्तं यया जगत् ।
यस्तत्र कूपे वसते महाहिः काल एव सः ।
यो वृक्षः स च मृत्युर्हि स्वकृतं तस्य तत्फलम् ।
ये तु कृष्णाः सिता राजन्मूषिका रात्र्यहानि वै ।
द्विषङ्कपदसंयुक्तो यो हस्ती षण्मुखाकृतिः ।
स च संवत्सरः प्रोक्तः पादमासर्तवो मुखाः ।
एतत्संसारचक्रस्य स्वरूपं व्याहृतं मया ।
एवं लब्धधनं राजंस्तत्स्वरूपं विनाशय ।
एतज्ज्ञात्वा तु सा राजन्परं वैराग्यमास्थिता ।
यथोक्तविधिना भूयः परं पदमवाप सः ।
धत्ते धारयते चैव एतस्मात्कारणाद्धनम् ।
तद्गच्छ चामृतं शुद्धं हिरण्यममृतं तपः ।
तत्स्वरूपो महादेवः कृष्णो देवकिनन्दनः ।
तस्य प्रसादाद्दुःखस्य नाशं प्राप्स्यसि मानद ।
एकः कर्ता स कृष्णश्च ज्ञानिनां परमा गतिः ।
इदमाश्रित्य देवेन्द्रो देवा रुद्रास्तथाश्विनौ ।
स्वे स्वे पदे विविशिरे भुक्तिमुक्तिविदो जनाः ।
भूतानामन्तरात्मासौ स नित्यपदसंवृतः ।
श्रूयतामस्य सद्भावः सम्यग्ज्ञानं यथा तव ।
भवेदेतन्निबोध त्वं नारदाय पुरा हरिः ।
दर्शयित्वात्मनो रूपं यदवोचत्स्वयं विभुः ।
पुरा देव ऋषिः श्रीमान्नारदः परमार्थवान् ।
चचार पृथिवीं कृत्स्नां तीर्थान्यनुचरन्प्रभुः ।
हिमवत्पादमाश्रित्य विचार्य च पुनः पुनः ।
स ददर्श ह्रदं तत्र पद्मोत्पलसमाकुलम् ।
ददर्श कन्यां तत्तीरे सर्वाभरणभूषिताम् ।
शोभमानां श्रिया राजन्क्रीडन्तीमुत्पलैस्तथा ।
सा महात्मानमालोक्य नारदेत्याह भामिनी ।
तस्याः समीपमासाद्य तस्थौ विस्मितमानसः ।
वीक्षमाणं तमाज्ञाय सा कन्या चारुहासिनी ।
विजजृम्भे महाभागा स्मयमाना पुनः पुनः ।
तस्मात्समभवद्वक्त्रात्पुरुषाकृतिसंयुतः ।
रत्नबिन्दुचिताङ्गस्तु सर्वाभरणभूषितः ।
आदित्यसदृशाकारः शिरसा धारयन्मणिम् ।
पुनरेव तदाकारसदृशः समजायत ।
तृतीयस्तु महाराज विविधाभरणैर्युतः ।
प्रदक्षिणं तु तां कृत्वा विविधध्वनयस्तु ताम् ।
ततः सर्वेण विप्रर्षिः कन्यां पप्रच्छ तां शुभाम् ।
का त्वं परमकल्याणि पद्मेन्दुसदृशानने ।
न जाने त्वां महादेवि ब्रूहि सत्यमनिन्दिते ।

कन्योवाच ।

सावित्री नाम विप्रर्षे शृणु भद्रं तवास्तु वै ।
किं करिष्यामि तद्ब्रूहि तव यच्चेतसि स्थितम् ।

नारद उवाच ।

अभिवादये त्वां सावित्रि कृतार्थोऽहमनिन्दिते ।
एतं मे संशयं देवि वक्तुमर्हसि शोभने ।
यस्तु वै प्रथमोत्पन्नः कोऽसौ स पुरुषाकृतिः ।
बिन्दवस्तु महादेवि मूर्ध्नि ज्योतिर्मयाकृतिः ।

कन्योवाच ।

अग्रजः प्रथमोत्पन्नो यजुर्वेदस्तथापरः ।
तृतीयः सामवेदस्तु संशयो व्येतु ते मुने ।
वेदाश्च बिन्दुसंयुक्ता यज्ञस्य फलसंश्रिताः ।

15

(L. 36) ॐ Cv : तद्धनं, तव देहाख्यं धनम् । ॐ —(L. 57) Kumbh. ed. पाश- (for पाद-). —(L. 62) ॐ Cv: धत्ते, अधःपतनम् । धारयते, ज्ञानभक्त्यादिगुणान् । ॐ —(L. 82) Cv विजिजृंभे (for विजजृम्भे).

यत्तदृष्टं महज्ज्योतिर्ज्योतिरित्युच्यते बुधैः ।
ऋषे ज्ञेयं मया चापीत्युक्त्वा चान्तरधीयत ।
ततः स विस्मयाविष्टो नारदः पुरुषर्षभ ।
ध्यानयुक्तः स तु चिरं न बुबोध महामतिः ।
ततः स्नात्वा महातेजा वाग्यतो नियतेन्द्रियः ।
तुष्टाव पुरुषव्याघ्रो जिज्ञासुश्च तदद्भुतम् ।
ततो वर्षशते पूर्णे भगवाल्ँलोकभावनः ।
प्रादुश्चकार विश्वात्मा ऋषेः परमसौहृदात् ।
तमागतं जगन्नाथं सर्वकारणकारणम् ।
अखिलामरमौल्यङ्गरुक्मारुणपदद्वयम् ।
वैनतेयपदस्पर्शकणशोभितजानुकम् ।
पीताम्बरलसत्काञ्चीदामबद्धकटीतटम् ।
श्रीवत्सवक्षसं चारुमणिकौस्तुभकन्धरम् ।
मन्दस्मितमुखाम्भोजं चलदायतलोचनम् ।
नम्रचापानुकरणनम्रभ्रूयुगशोभितम् ।
नानारत्नमणीवज्रस्फुरन्मकरकुण्डलम् ।
इन्द्रनीलनिभाभं तं केयूरमकुटोज्ज्वलम् ।
देवैरिन्द्रपुरोगैश्च ऋषिसंघैरभिष्टुतम् ।
नारदो जयशब्देन ववन्दे शिरसा हरिम् ।
ततः स भगवाञ्श्रीमान्मेघगम्भीरया गिरा ।
प्राहेशः सर्वभूतानां नारदं पतितं क्षितौ ।
भद्रमस्तु ऋषे तुभ्यं वरं वरय सुव्रत ।
यत्ते मनसि सुव्यक्तमस्ति च प्रददामि तत् ।
स चेमं जयशब्देन प्रसीदेत्यातुरो मुनिः ।
प्रोवाच हृदि संरूढं शङ्खचक्रगदाधरम् ।
विवक्षितं जगन्नाथ मया ज्ञातं त्वयाच्युत ।
तत्प्रसीद हृषीकेश श्रोतुमिच्छामि तद्धरे ।
ततः स्मयन्महाविष्णुरभ्यभाषत नारदम् ।
यद्दृष्टं मम रूपं तु वेदानां शिरसि त्वया ।
निर्द्वंद्वा निरहंकाराः शुचयः शुद्धलोचनाः ।
तं मां पश्यन्ति सततं तान्पृच्छ यदिहेच्छसि ।
ये योगिनो महाप्राज्ञा मदंशा ये व्यवस्थिताः ।
तेषां प्रसादं देवर्षे मत्प्रसादमवेहि तत् ।

भीष्म उवाच ।

इत्युक्त्वा स जगामाथ भगवान्भूतभावनः ।
तस्माद्भज हृषीकेशं कृष्णं देवकिनन्दनम् ।
एतमाराध्य गोविन्दं गता मुक्तिं महर्षयः ।
एष कर्ता विकर्ता च सर्वकारणकारणम् ।
मयाप्येतच्छ्रुतं राजन्नारदात्तु निबोध तत् ।
स्वयमेव समाचष्ट नारदो भगवान्मुनिः ।

समस्तसंसारविघातकारणं
भजन्ति ये विष्णुमनन्यमानसाः ।
ते यान्ति सायुज्यमतीवदुर्लभ-
मितीव नित्यं हृदि वर्णयन्ति ।

Colophon.

## 16

After 12. 200. 43, Kumbh. ed. **Cv** ins.:

ऐन्द्रं रूपं समास्थाय ह्यसुरेभ्यश्चरन्महीम् ।
स एव भगवान्देवो वेदित्वं च गता मही ।
एवंभूते भूतसृष्टिर्नारसिंहादयः क्रमात् ।
प्रादुर्भावाः स्मृता विष्णोर्जगतीरक्षणाय वै ।
एष कृष्णो महायोगी तत्तत्कार्यानुरूपणम् ।
हिरण्यकशिपुं दैत्यं हिरण्याक्षं तथैव च ।
रावणं च महादैत्यं हत्वासौ पुरुषोत्तमः ।
भूमेर्दुःखोपनाशार्थं ब्रह्मशक्रादिभिः स्तुतः ।
आत्मनोऽङ्गान्महातेजा उद्बबर्ह जनार्दनः ।
सितकृष्णौ महाराज केशौ हरिरुदारधीः ।
वसुदेवस्य देवक्यामेष जात इहोत्तमः ।
देहवानिह विश्वात्मा संबन्धी ते जनार्दनः ।
आविर्बभूव योगीन्द्रो मनोतीतो जगत्पतिः ।
अचिन्त्यः पुरुषव्याघ्र नैव केवलमानुषः ।
अव्यक्तादिविशेषान्तं परीमाणार्थसंयुतम् ।
क्रीडा हरेरिदं सर्वं क्षरमित्येव धार्यताम् ।
अक्षरं तत्परं नित्यं वैरूप्यं जगतो हरेः ।
तद्विद्धि रूपमतुलममृतत्वं भवर्जितम् ।
तदेव कृष्णो दाशार्हः श्रीमाञ्श्रीवत्सलक्षणः ।
न भूतसृष्टिसंस्थानं देहोऽस्य परमात्मनः ।
देहवानिह यो विष्णुरसौ मायामयो हरिः ।
आत्मनो लोकरक्षार्थं ध्याहि नित्यं सनातनम् ।

—(L. 100) ❀ **Cv**: बिन्दुः, प्रणवः। ❀ —(L. 101) **Cv** तत् (for यत्). —(L. 111) Kumbh. ed. ·किण·; **Cv** (gloss: वैनतेयेन पदस्पर्शे क्रियमाणे सति कणाः ये पादारविन्दरजःकणा उत्क्षिप्तास्तैः शोभितजानुकम्) ·कण· (as above). —(L. 116) ❀ **Cv**: नानारत्नमणी·, मणीनां, मुक्तामणीनाम्, ईः लक्ष्मीः — ईकारोऽब्जदले लक्ष्म्यां वाण्यां कमलकेसरे — इति रत्नमाला। ❀

16

(L. 17) ❀ **Cv**: वैरूप्यं, क्षराक्षराभ्यां वैलक्षण्यम् । ❀ —(L. 22) ❀ **Cv**: आत्मनो लोकः, स्वमक्तलोकः। ❀

अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः ।
इतिहासपुराणानि धर्माः स्वायंभुवादयः ।
य एनं प्रतिवर्तन्ते वेदान्तानि च सर्वशः ।
भक्तिहीना न तैर्यान्ति नित्यमेनं कथंचन ।
सर्वभूतेषु भूतात्मा तत्तद्बुद्धिं समास्थितः ।
तस्माद्बुद्धस्त्वमेवैनं ध्याहि नित्यमतन्द्रितः ।

## 17 A

After 12.202, Kumbh. ed. Cv ins.:

युधिष्ठिर उवाच ।

पितामह महाप्राज्ञ केशवस्य महात्मनः ।
वक्तुमर्हसि तत्त्वेन माहात्म्यं पुनरेव तु ।
न तृप्याम्यहमप्येनं पश्यञ्शृण्वंश्च भारत ।
एवं कृष्णं महाबाहो तस्मादेतद्ब्रवीहि मे ।

भीष्म उवाच ।

शृणु राजन्कथामेतां वैष्णवीं पापनाशनीम् ।
नारदो मां पुरा प्राह यामहं ते वदामि ताम् ।
देवर्षिर्नारदः पूर्वं तत्त्वं वेत्स्यामि वै हरेः ।
इति संचिन्त्य मनसा दध्यौ ब्रह्म सनातनम् ।
हिमालये शुभे दिव्ये दिव्यं वर्षशतं किल ।
अनुच्छ्वसन्निराहारः संयतात्मा जितेन्द्रियः ।
ततोऽन्तरिक्षे वागासीत्तं मुनिप्रवरं प्रति ।
मेघगम्भीरनिर्घोषा दिव्या बाह्याशरीरिणी ।
किमर्थं त्वं समापन्नो ध्यानं मुनिवरोत्तम ।
अहं ददामि ते ज्ञानं धर्मार्थं वा वृणीष्व माम् ।
तच्छ्रुत्वा मुनिरालोच्य संभ्रमाविष्टमानसः ।
किं नु स्यादिति संचिन्त्य वाक्यमाहापरं प्रति ।
कस्माद्भवानद्य बिभेद यानं
समास्थितो वाक्यमुदीरयन्माम् ।
न रूपमन्यत्तव दृश्यते वै
ईदृग्विधस्त्वं समधिष्ठितोऽसि ।
पुनस्तमाह स मुनिमनन्तोऽहं बृहत्तरः ।
न मां मूढा विजानन्ति ज्ञानिनो मां विदन्त्युत ।
तं प्रत्याह मुनिः श्रीमान्प्रणतो विनयान्वितः ।
भवन्तं ज्ञातुमिच्छामि तव तत्त्वं ब्रवीहि मे ।
तस्य तद्वचनं श्रुत्वा नारदं प्राह लोकपः ।
ज्ञानेन मां विजानीहि नान्यथा शक्तिरस्ति ते ।

नारद उवाच ।

किंदृग्विधं तु तज्ज्ञानं येन जानामि ते तनुम् ।
अनन्त तन्मे ब्रूहि त्वं यद्यनुग्रहवानहम् ।

लोकपाल उवाच ।

विकल्पहीनं विपुलं तस्य चू[?दू]रं शिवं परम् ।
ज्ञानं तत्तेन जानासि साधनं प्रति ते मुने ।
अत्रावृत्य स्थितं ह्येतत्तच्छुद्धमितरन्मृषा ।
एतत्ते सर्वमाख्यातं संक्षेपान्मुनिसत्तम ।

नारद उवाच ।

त्वमेव तव तत्तत्त्वं ब्रूहि लोकगुरो मम ।
भवन्तं ज्ञातुमिच्छामि कीदृग्भूतस्त्वमव्यय ।
ततः प्रहस्य भगवान्मेघगम्भीरया गिरा ।
प्राहेशः सर्वभूतानां न मे चास्यं श्रुतिर्न च ।
न घ्राणजिह्वे दृक्चैव त्वचा नास्ति तथा मुने ।
कथं वक्ष्यामि चात्मानमशरीरस्तथाप्यहम् ।
तज्ज्ञात्वा विस्मयाविष्टो मुनिराह प्रगम्य तम् ।
येन त्वं पूर्वमात्मानमनन्तोऽहं बृहत्तरः ।
शक्तोऽहमिति मां प्रीतः प्रोक्तवानसि तत्कथम् ।
पुनस्तमाह भगवांस्तवाप्यक्षाणि सन्ति वै ।
त्वमेनं ब्रूहि चात्मानं यदि शक्नोषि नारद ।
आत्मा यथा तव मुने विदितस्तु भविष्यति ।
मां च जानासि तेन त्वमेकं साधनमावयोः ।
इत्युक्त्वा भगवान्देवस्ततो नोवाच किंचन ।
नारदोऽप्युत्स्मयन्खिन्नः क्व गतोऽसाविति प्रभुः ।
स्थित्वा स दीर्घकालं च मुनिर्व्यामूढमानसः ।
आह मां भगवान्देवस्त्वनन्तोऽहं बृहत्तरः ।
तेनाहमिति सर्वस्य को वानन्तो बृहत्तरः ।
केयमुर्वी ह्यनन्ताख्या बृहती नूनमेव सा ।
यस्यां जानन्ति भूतानि विलीनानि ततस्ततः ।
एनां पृच्छामि तरुणीं सैषा नूनमुवाच माम् ।
इत्येवं स मुनिः श्रीमान्कृत्वा निश्चयमात्मनः ।
स भूतलं समाविश्य प्रणिपत्येदमब्रवीत् ।
आश्चर्यासि च धन्यासि बृहती त्वं वसुंधरे ।
त्वामत्र वेत्तुमिच्छामि यादृग्भूतासि शोभने ।
तच्छ्रुत्वा धरणी देवी स्मयमानाब्रवीदिदम् ।
नाहं हि बृहती विप्र न चानन्ता च सत्तम ।

17A

(L. 17) Kumbh. ed. कस्माद्भवानंडं बिभेद मध्ये. —(L. 43) ❀ Cv: एनं, तव हृदि ध्येयतया स्थितमन्तर्यामिणं परमात्मानम् । ❀

कारणं मम यो गन्धो गन्धात्मानं ब्रवीहि तम् ।
ततो मुनिस्तद्धि तत्त्वं प्रणिपत्येदमब्रवीत् ।
आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ।
[ ततो गन्धात्मकः सोऽनु प्रत्युवाच मुनिं प्रति । ]
कारणं मे जलं मत्तो बृहत्तरतमं हि तत् ।
स समुद्रं मुनिर्गत्वा प्रणिपत्येदमब्रवीत् ।
आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ।
तच्छ्रुत्वा सरितां नाथः समुद्रो मुनिमब्रवीत् ।
कारणं मेऽत्र संपृच्छ रसात्मानं बृहत्तरम् ।
ततो बृहत्तरं विद्धंस्त्वं पृच्छ मुनिसत्तम ।
ततो मुनिर्यथायोगं जलं तत्त्वमवेक्ष्य तत् ।
जलात्मानं प्रणम्याह जलतत्त्वस्थितो मुनिः ।
आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं श्रोतुमिच्छामि कीदृग्भूतस्त्वमव्यय ।
ततो रसात्मकः सोऽनु मुनिमाह पुनः पुनः ।
ममापि कारणं पृच्छ तेजोरूपं विभावसुम् ।
नाहं बृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम ।
ततोऽग्निं प्रणिपत्याह मुनिर्विस्मितमानसः ।
यज्ञात्मानं महावासं सर्वभूतनमस्कृतम् ।
आश्चर्योऽसि च धन्योऽसि ह्यनन्तश्च बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि किदृग्भूतस्त्वमव्यय ।
ततः प्रहस्य भगवान्मुनिं स्विष्टकृदब्रवीत् ।
नाहं बृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम ।
कारणं मम रूपं यत्तं पृच्छ मुनिसत्तम ।
ततो योगक्रमेणैव प्रतीतं तं प्रविश्य सः ।
रूपात्मानं प्रणम्याह नारदो वदतां वरः ।
आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ।
उत्स्मयित्वा तु रूपात्मा तं मुनिं प्रत्युवाच ह ।
वायुर्मे कारणं ब्रह्मंस्तं पृच्छ मुनिसत्तम ।
मत्तो बहुतरः श्रीमाननन्तश्च महाबलिम् ।
स मारुतं प्रणम्याह भगवान्मुनिसत्तमः ।
योगसिद्धो महायोगी ज्ञानविज्ञानपारगः ।
आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ।
ततो वायुर्हि संप्राह नारदं मुनिसत्तमम् ।
कारणं पृच्छ भगवन्स्पर्शात्मानं ममाद्य वै ।
मत्तो बृहत्तरः श्रीमाननन्तश्च तथैव सः ।
ततोऽस्य वचनं श्रुत्वा स्पर्शात्मानमुवाच सः ।
आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ।
तस्य तद्वचनं श्रुत्वा स्पर्शात्मा मुनिमब्रवीत् ।
नाहं बृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम ।
कारणं मम चैवेममाकाशं च बृहत्तरम् ।
तं पृच्छ मुनिशार्दूल सर्वव्यापिनमव्ययम् ।
तच्छ्रुत्वा नारदः श्रीमान्वाक्यं वाक्यविशारदः ।
आकाशं समुपागम्य प्रणम्याह कृताञ्जलिः ।
आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ।
आकाशस्तमुवाचेदं प्रहसन्मुनिसत्तमम् ।
नाहं बृहत्तरो ब्रह्मञ्शब्दो वै कारणं मम ।
तं पृच्छ मुनिशार्दूल स वै मत्तो बृहत्तरः ।
ततो ह्याविश्य चाकाशं शब्दात्मानमुवाच ह ।
स्वरव्यञ्जनसंयुक्तं नानाहेतुविभूषितम् ।
वेदाख्यं परमं गुह्यं वेदकारणमच्युतम् ।
आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं श्रोतुमिच्छामि कीदृग्भूतस्त्वमव्यय ।
वेदात्मा प्रत्युवाचेदं नारदं मुनिपुंगवम् ।
मया कारणभूतेन सर्ववेत्ता पितामहः ।
ब्रह्मणो बुद्धिसंस्थानमास्थितोऽहं महामुने ।
तस्माद्बृहत्तरो मत्तः पद्मयोनिर्महामतिः ।
तं पृच्छ मुनिशार्दूल सर्वकारणकारणम् ।
ब्रह्मलोकं ततो गत्वा नारदो मुनिपुंगवैः ।
सेव्यमानं महात्मानं लोकपालैर्मरुद्गणैः ।
समुद्रैश्च सरिद्भिश्च भूततत्त्वैः सभूधरैः ।
गन्धर्वैरप्सरोभिश्च ज्योतिषां च गणैस्तथा ।
स्तुतिस्तोमग्रहस्तोभैस्तथा वेदैर्मुनीश्वरैः ।
उपास्यमानं ब्रह्माणं लोकनाथं परात्परम् ।
हिरण्यगर्भं विश्वेशं चतुर्वक्त्रेण भूषितम् ।
प्रणम्य प्राञ्जलिः प्रह्वस्तमाह मुनिपुंगवः ।
आश्चर्योऽसि च धन्योऽसि ह्यनन्तोऽसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ।
तच्छ्रुत्वा भगवान्ब्रह्मा सर्वलोकपितामहः ।
उत्स्मयन्मुनिमाहेदं कर्ममूलस्य लोपकम् ।

—Kumbh. ed. om. lines 62-64.

— (L. 141) Cv आस्थाय (for आस्थितः).

नाहं बृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम ।
लोकानां मम सर्वेषां नाथभूतो बृहत्तरः ।
नन्दगोपकुले गोपकुमारैः परिवारितः ।
समस्तजगतां गोप्ता गोपवेषेण संस्थितः ।
मद्रूपं च समास्थाय जगत्सृष्टिं करोति सः ।
ऐशानमास्थितः श्रीमान्हन्ति नित्यं हि पाति च ।
विष्णुः स्वरूपरूपोऽसौ कारणं स हरिर्मम ।
तं पृच्छ मुनिशार्दूल स चानन्तो बृहत्तरः ।
ततोऽवतीर्य भगवान्ब्रह्मलोकान्महामुनिः ।
नन्दगोपकुले विष्णुमेनं कृष्णं जगत्पतिम् ।
बालक्रीडनकासक्तं वत्सजालविभूषितम् ।
पाययित्वाथ बध्नन्तं धूलिधूम्राननं परम् ।
गाहमानैर्हसद्भिश्च नृत्यद्भिश्च समन्ततः ।
पाणिवादनकैश्चैव संवृतं वेणुवादकैः ।
प्रणिपत्याब्रवीदेनं नारदो भगवान्मुनिः ।
आश्चर्योऽसि च धन्योऽसि ह्यनन्तश्च बृहत्तरः ।
वेत्तासि चाव्ययश्चासि वेत्तुमिच्छामि यादृशम् ।
ततः प्रहस्य भगवान्नारदं प्रत्युवाच ह ।
मत्तः परतरं नास्ति मत्तः सर्वं प्रतिष्ठितम् ।
मत्तो बृहत्तरं नान्यदहमेव बृहत्तरः ।
आकाशे च स्थितः पूर्वमुक्तवानहमेव ते ।
न मां वेत्ति जनः कश्चिन्माया मम दुरत्यया ।
भक्त्या त्वनन्यया युक्ता मां विजानन्ति योगिनः ।
प्रियोऽसि मम भक्तोऽसि मम तत्त्वं विलोकय ।
ददामि तव तज्ज्ञानं येन तत्त्वं प्रपश्यसि ।
अन्येषां चैव भक्तानां मम योगरतात्मनाम् ।
ददामि दिव्यं ज्ञानं च तेन ते यान्ति मत्पदम् ।
एवमुक्त्वा ययौ कृष्णो नन्दगोपगृहं हरिः ।

भीष्म उवाच ।

एतत्ते कथितं राजन्विष्णुतत्त्वमनुत्तमम् ।
भजस्वैनं विशालाक्षं जपन्कृष्णेति सत्तम ।
मोहयन्मां तथा त्वां च शृणोत्येष मयेरितान् ।
धर्मात्मा च महाबाहो भक्तान्रक्षति नान्यथा ।

Colophon.

## 17B

Kumbh. ed. $C_v$ cont.: $D_7$ T $G_{1-3,6}$ $M_5$ ins. after 12. 202:

युधिष्ठिर उवाच ।

पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
प्रयाणकाले किं जप्यं मोक्षिभिस्तत्त्वचिन्तकैः ।
किमनुस्मरन्कुरुश्रेष्ठ मरणे पर्युपस्थिते ।
प्राप्नुयात्परमां सिद्धिं श्रोतुमिच्छामि तत्त्वतः ।

भीष्म उवाच ।

त्वद्युक्तश्च हितः सूक्ष्म उक्तः प्रश्नस्त्वयानघ ।
शृणुष्वावहितो राजन्नारदेन पुरा श्रुतम् ।
श्रीवत्साङ्कं जगद्बीजमनन्तं लोकसाक्षिणम् ।
पुरा नारायणं देवं नारदः परिपृष्टवान् ।
त्वामक्षरं परं ब्रह्म निर्गुणं तमसः परम् ।
आद्यं वेद्यं परं धाम ब्रह्मादिकमलोद्भवम् ।
भगवन्भूतभव्येश श्रद्दधानैर्जितेन्द्रियैः ।
कथं भक्तैर्विचिन्त्योऽसि योगिभिर्मोक्षकाङ्क्षिभिः ।
किं जप्यं किं जपेन्नित्यं काल्यमुत्थाय मानवः ।
कथं युञ्जन्सदा ध्यायेद्ब्रूहि तत्त्वं सनातनम् ।
श्रुत्वा च नारदोक्तं तु देवानामीश्वरः स्वयम् ।
प्रोवाच भगवान्विष्णुर्नारदं वरदः प्रभुः ।
हन्त ते कथयिष्यामि इमां दिव्यामनुस्मृतिम् ।
यामधीत्य प्रयाणे तु मद्भावायोपपद्यते ।
ॐकारमग्रतः कृत्वा मां नमस्कृत्य नारद ।

---

—Kumbh. ed. reads from 160 post. half to 162 post. half twice. — 56-57 ± 62-63 ± 67-68 ± 74-75 ± 81-82 ± 88-89 ± 95-96 ± 101-102 ± 109-110 ± 117-118 ± 132-133 ± 151-152.

17B

(L. 3) $G_{1,2}$ Kumbh. ed. नु (for अनु॰). $G_1$ Kumbh. ed. समुपस्थिते (for पर्यु॰). —(L. 4) $G_1$ परमं देवं (for परमां सिद्धिं). $G_1$ om. from श्रोतु up to देवं (in line 8, prior half). —(L. 5) $D_7$ $T_1$ $G_{3,6}$ तद्युक्तिसहितः; $T_2$ तद्युक्तश्च हितः; $G_2$ $M_5$ सद्युक्तिसहितः (for त्वद्युक्तश्च हितः). —(L. 8) Kumbh. ed. नारदः पर्यपृच्छत (for the post. half). —(L. 9) Kumbh. ed. अक्षरं परमं ब्रह्म (for the prior half). —(L. 10) Kumbh. ed. वैद्यं (for वेद्यं). ❀ $C_v$: चतुर्मुखब्रह्मणः आदिभूतस्य कमलस्य उद्भवो यस्मात्तम् । ❀ —(L. 12) Kumbh. ed. योगिभिर्देहमोक्षिभिः (for the post. half). —(L. 13) $M_5$ Kumbh. ed. किं नु ($M_5$ च) जप्यं (for किं जप्यं किं). $T_2$ कल्यम्; $G_{1,2}$ कल्य (for काल्यम्). —After line 13, Kumbh. ed. ins.:

स्मरेच्च म्रियमाणो वै विशेषेण महाद्युते ।

एकाग्रः प्रयतो भूत्वा इमं मन्त्रमुदीरयेत् ।
ॐ नमो भगवते वासुदेवाय इति ।
इत्युक्तो नारदः प्राह प्राञ्जलिः प्रणतः स्थितः ।
सर्वदेवेश्वरं विष्णुं सर्वात्मानं हरिं प्रभुम् ।
अव्यक्तं शाश्वतं देवं प्रभवं पुरुषोत्तमम् ।
प्रपद्ये प्राञ्जलिर्विष्णुमक्षरं परमं पदम् ।
पुराणं प्रभवं नित्यमक्षयं लोकसाक्षिणम् ।
प्रपद्ये पुण्डरीकाक्षमीशं भक्तानुकम्पिनम् ।
लोकनाथं सहस्राक्षमद्भुतं परमं पदम् ।
भगवन्तं प्रपन्नोऽस्मि भूतभव्यभवत्प्रभुम् ।
स्रष्टारं सर्वलोकानामनन्तं सर्वतोमुखम् ।
पद्मनाभं हृषीकेशं प्रपद्ये सत्यमच्युतम् ।
हिरण्यगर्भममृतं भूगर्भं परतः परम् ।
प्रभोः प्रभुमनाद्यन्तं प्रपद्ये तं रविप्रभम् ।
सहस्रशीर्षं पुरुषं महर्षिं तत्त्वभावनम् ।
प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम् ।
नारायणं पुराणर्षिं योगात्मानं सनातनम् ।
संस्थानं सर्वतत्त्वानां प्रपद्ये ध्रुवमीश्वरम् ।
यः प्रभुः सर्वभूतानां येन सर्वमिदं ततम् ।
चराचरगुरुर्विष्णुः स मे देवः प्रसीदतु ।
यस्मादुत्पद्यते ब्रह्मा पद्मयोनिः सनातनः ।
ब्रह्मयोनिर्हि विश्वात्मा स मे विष्णुः प्रसीदतु ।
यः पुरा प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोके परावरे ।
आभूतसंप्लवे चैव प्रलीनेऽप्राकृतो महान् ।
एकस्तिष्ठति विश्वात्मा स मे विष्णुः प्रसीदतु ।
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ।
पर्जन्यः पृथिवी सस्यं कालो धर्मः क्रियाक्रिये ।
गुणाकरः स मे बभ्रुर्वासुदेवः प्रसीदतु ।
अग्नीषोमार्कताराणां ब्रह्मरुद्रेन्द्रयोगिनाम् ।
यस्तेजयति तेजांसि स मे विष्णुः प्रसीदतु ।
योगावास नमस्तुभ्यं सर्वावास वरप्रद ।
यज्ञगर्भ हिरण्याङ्ग पञ्चयज्ञ नमोऽस्तु ते ।
चतुर्मूर्ते परं धाम लक्ष्म्यावास परार्चित ।
सर्वावास नमस्तेऽस्तु वासुदेव प्रधानकृत् ।
अजस्त्वनामयः पन्था ह्यमूर्तिर्विश्वमूर्तिधृक् ।
विकर्तः पञ्चकालज्ञ नमस्ते ज्ञानसागर ।
अव्यक्ताद्व्यक्तमुत्पन्नमव्यक्ताद्यः परोऽक्षरः ।
यस्मात्परतरं नास्ति तमस्मि शरणं गतः ।
न प्रधानो न च महान्पुरुषश्चेतनो ह्यजः ।
अनयोर्यः परतरस्तमस्मि शरणं गतः ।
चिन्तयन्तो हि यं नित्यं ब्रह्मेशानादयः प्रभुम् ।
निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः ।
जितेन्द्रिया महात्मानो ज्ञानध्यानपरायणाः ।
यं प्राप्य न निवर्तन्ते तमस्मि शरणं गतः ।

—(L. 14) Kumbh. ed. समाध्यायेद् (for सदा ध्या°). $D_7$ $T_1$ $G_{1-3,6}$ सत्त्वं (for तत्त्वं). —(L. 19) $G_{3,6}$ भारत (for नारद). —(L. 20) $T_2$ एकाग्र्यः (for °ग्रः). $D_7$ $T_1$ इदं (for इमं). —(L. 21) $G_1$ om. भगवते. —(L. 22) $G_1$ इत्युक्त्वा (for इत्युक्तो). —(L. 23) $G_1$ सर्वमेवेश्वरं (for °देवेश्वरं). — Before line 24, $G_{3,6}$ ins. नारायण उवाच. —(L. 24) Kumbh. ed. अव्ययं (for अव्यक्तं). $D_7$ $T_1$ दैवं (for देवं). —(L. 25) $T_1$ अक्षय्यं; $T_2$ अक्षयं (for अक्षरं). $G_1$ प्रभुं (for पदम्). — $D_7$ om. (hapl.) lines 26–28. —(L. 26) Kumbh. ed. विष्णुम् (for नित्यम्). $G_{1,2}$ अक्षरं (for अक्षयं). —(L. 33) $T_2$ [ऽ]हं (for तं). —(L. 34) $G_{3,6}$ महांतं (for महर्षिं). —(L. 37) $T_2$ संघातं; $M_5$ संयातं (for संस्थानं). $T_2$ $G_{1,2}$ -सत्त्वानां (for -तत्त्वानां). —(L. 38) $M_5$ सर्वलोकानां (for °भूतानां). —(L. 39) Kumbh. ed. परावर- (for चराचर-). —(L. 40) $T_2$ देवः (for ब्रह्मा). —(L. 41) $G_1$ देवः (for विष्णुः). — $G_1$ reads lines 42–45 after line 51. —(L. 43) Kumbh. ed. लोक- (for लोके). $G_3$ परापरे. —(L. 44) $T_1$ अभूते; $G_2$ अभूत- (for आभूत-). —(L. 45) $G_1$ देवः (for विष्णुः). —(L. 46) ❀ Cv : 'आश्रावय' इति चतुरक्षरम् । 'अस्तु श्रौषट्' इति चतुरक्षरम् । 'यज' इति द्व्यक्षरम् । 'ये यजामहे' इति पञ्चाक्षरम् । द्व्यक्षरो वषट्कारः — इति श्रुतिवचनादेवार्थोऽवगन्तव्यः । ❀ —(L. 47) $D_7$ $T_1$ $G_{1,6}$ नो (for मे). —(L. 48) $D_7$ पृथिर्वी (for °वी). $D_7$ सर्वां; $T_1$ $G_6$ सत्यं; $G_{1,2}$ सर्वं (for सस्यं). —(L. 49) $T_2$ गुणात्परः; $G_1$ गुराकरः (for गुणाकरः). $G_1$ $M_5$ नो (for मे). $D_7$ T $G_{1-3,6}$ विष्णुर्; Cv (gloss : कनकवर्णः) बभ्रुर् (as above). —(L. 50) $T_2$ $G_1$ अग्निसोमार्क- (for अग्नीषो°). $G_2$ ब्रह्मसोमेंद्र- (for °रुद्रेन्द्र-). — $G_1$ reads line 51 twice. —(L. 51) $G_1$ (both times) यस्ते यजाति. — After line 51, $G_1$ reads lines 42–45. —(L. 52) $G_1$ $M_5$ योगवास. —(L. 54) $T_1$ पराचित; $M_5$ वरार्चित (for परा°). —(L. 55) T $G_{3,6}$ वासुदेवः (for वासुदेव). —(L. 56) $D_7$ T $G_{1-3,6}$ त्वम(  $G_3$ °मा )गमः (for त्वनामयः). $T_2$ -मूर्तिभाक्; Kumbh. ed. °धृत् (for °धृक्). —(L. 57) $D_7$ त्रिवर्गः; $T_1$ $G_{3,6}$ त्रिगर्त- ($G_3$ °र्तः); $T_2$ त्रिकर्तः; $G_{1,2}$ $M_5$ त्रिणर्तः (for विकर्तः). —(L. 58) $T_2$

एकांशेन जगत्सर्वमवष्टभ्य विभुः स्थितः ।
अग्राह्यो निर्गुणो नित्यं तमसि शरणं गतः ।
सोमार्काग्निमयं तेजो या च तारमयी द्युतिः ।
दिवि संजायते योऽयं स महात्मा प्रसीदतु ।
गुणादिर्निर्गुणश्चाद्यो लक्ष्मीवांश्चेतनो ह्यजः ।
सूक्ष्मः सर्वगतो योगी स महात्मा प्रसीदतु ।
अव्यक्तं समधिष्ठाता अचिन्त्यः सदसत्परः ।
आस्थितः परमं भुङ्क्ते स महात्मा प्रसीदतु ।
क्षेत्रज्ञः पञ्चधा भुङ्क्ते प्रकृतिं पञ्चभिर्मुखैः ।
महान्गुणांश्च यो भुङ्क्ते स महात्मा प्रसीदतु ।
सूर्यमध्ये स्थितः सोमस्तस्य मध्ये च या स्थिता ।
भूतबाह्या च या दीप्तिः स महात्मा प्रसीदतु ।
नमस्ते सर्वतः सर्व सर्वतोक्षिशिरोमुख ।
निर्विकार नमस्तेऽस्तु साक्षी क्षेत्रध्रुवस्थितिः ।
अतीन्द्रिय नमस्तुभ्यं लिङ्गैर्व्यक्तैर्न मीयसे ।
ये च त्वां नाभिजानन्ति संसारे संसरन्ति ते ।
कामक्रोधविनिर्मुक्ता रागद्वेषविवर्जिताः ।
मान्यभक्ता विजानन्ति न पुनर्मारका द्विजाः ।
एकाकिनो हि निर्द्वंद्वा निराशीःकर्मकारिणः ।
ज्ञानाग्निदग्धकर्माणस्त्वां विशन्ति विनिश्चिताः ।
अशरीरं शरीरस्थं समं सर्वेषु देहिषु ।
पुण्यपापविनिर्मुक्ता भक्तास्त्वां प्रविशन्त्युत ।
अव्यक्तं बुद्ध्यहंकारौ मनोभूतेन्द्रियाणि च ।
त्वयि तानि च तेषु त्वं न तेषु त्वं न ते त्वयि ।
एकत्वान्यत्वनानात्वं ये विदुर्यान्ति ते परम् ।
समोऽसि सर्वभूतेषु न ते द्वेष्योऽस्ति न प्रियः ।
समत्वमभिकाङ्क्षेऽहं भक्त्या वै नान्यचेतसा ।
चराचरमिदं सर्वं भूतग्रामं चतुर्विधम् ।
त्वया त्वय्येव तत्प्रोतं सूत्रे मणिगणा इव ।
स्रष्टा भोक्तासि कूटस्थो ह्यतत्त्वस्तत्त्वसंज्ञितः ।
अकर्ता हेतुरचलः पृथगात्मन्यवस्थितः ।
न मे भूतेषु संयोगो भूततत्त्वगुणाधिकः ।
अहंकारेण बुद्ध्या वा न मे योगस्त्रिभिर्गुणैः ।
न मे धर्मोऽस्त्यधर्मो वा नारम्भो जन्म वा पुनः ।

G1 अव्यक्ताव्यक्तम् (for °क्ताद्यक्तम्). D7 T1 G3.6 व्यक्ताद्यः स (for अव्यक्ताद्यः). — D7 om. (hapl.) lines 60–67. T2 M5 om. (hapl.) lines 60–63. — (L. 64) G1 -परायणः. — (L. 66) G3 भुवि (for विभुः). T1 त्रिपादूर्ध्वं स्थितो योऽसावेकांशेन भुवि स्थितः. — (L. 67) Kumbh. ed. अग्राह्यं निर्गुणं. M5 नित्यम् (for नित्यं). — (L. 69) G3 यः (for ऽयं). M5 ममात्मा (for महात्मा). — (L. 70) G1 गुणादग्निर्गुणश्चान्यो (for the prior half). D7 T1 G1–3.6 [ऽ]प्यजः (for ह्यजः). — (L. 71) M5 ममात्मा (for महा°). — After line 71, Kumbh ed. ins.:

सांख्ययोगाश्च ये चान्ये सिद्धाश्च परमर्षयः ।
यं विदित्वा विमुच्यन्ते स महात्मा प्रसीदतु ।

— (L. 72) Kumbh. ed. अव्यक्तः (for अव्यक्तं). G2 समभिध्याता (for °धिष्ठाता). T2 M5 ह्यचिन्त्यः (for अचिन्त्यः). — (L. 73) D7 T G1–3.6 M5 अस्थितिः (for आस्थितः). D7 om. from परमं up to भुङ्क्ते (in line 75). T2 M5 प्रकृतिं; G3 परं; Kumbh. ed. प्रकृति- (for परमं). G1 मुक्तो; Kumbh. ed. -श्रेष्ठः (for भुङ्क्ते). M5 ममात्मा (for महा°). — G1 om. (hapl.) lines 74–75. — (L. 74) G2 क्षेत्रजः (for °ज्ञः). T1 G2.3.6 प्रकृतिः (for प्रकृतिं). — (L. 75) T G2.3.6 M5 महागुणांश् (for महान्गु°). M5 Cv ममात्मा (for महा°). — D7 om. (hapl.) lines 76–77. — (L. 76) ❀ Cv.: सूर्यमध्ये, हृत्पद्मस्थितसूर्यमण्डलमध्ये, सोमः, मण्डलरूपी सोमः, तस्य मध्ये च या दीप्तिः, वह्निमण्डलरूपा दीप्तिः स्थिता । ❀ — (L. 77) G1 भूतबाह्य; G2 °भाव्या; G3 °भव्या (for °बाह्या). ❀ Cv: भूतबाह्या, अप्राकृतज्ञानानन्दमयी । ❀ M5 ममात्मा (for महात्मा). — (L. 78) T2 जगतः (for सर्वतः). G1 सर्वाः; G2 सर्वे (for सर्व). — (L. 79) D7 G2.3.6 M5 क्षेत्री; T1 क्षेत्रि- (for क्षेत्र-). D7 T1 G1.3 ध्रुवः (G1 °व-) स्थितः. — (L. 80) D7 मीयते; T1 G1.6 दीयसे (for मीयसे). — (L. 81) D7 T1 G1.2.6 त्वा (for त्वां). — (L. 83) T2 नारका; Kumbh. ed. भवका (for मारका). — (L. 84) T Kumbh. ed. एकांतिनो (for °काकिनो). G6 निराशः (for °शीः-). — (L. 85) Kumbh. ed. विचिंतकाः (for विनिश्चिताः). — (L. 87) G1 तां (for त्वां). — (L. 88) T2 बुद्ध्यहंकारं; Kumbh. ed. °कार- (for °कारौ). G1 मनोबुद्धीन्द्रियाणि च. — (L. 89) G1 ते सत्त्वं (for तेषु त्वं). — (L. 90) G1 यंति. G1 वरं (for परम्). — (L. 91) M5 मे (for ते). — (L. 92) G1 समस्तम् (for समत्वम्). G1 [अ]नन्यचेतसा. — (L. 94) D7 त्वस्येव (for त्वय्येव). ❀ Cv: त्वया, त्वया सृष्टा । ❀ — (L. 95) G3 ह्यमात्मस् (for ह्यतत्त्वस्). Kumbh. ed. ह्यतत्त्वं तत्त्वसंज्ञिकः (for the post. half). ❀ Cv: अतत्त्वः, चतुर्विंशतितत्त्वभिन्नः । ❀ — (L. 96) D7 T1 G1–3.6 अकर्म (G1.6 °र्मा) (for अकर्ता). — (L. 97) T2 Kumbh. ed. ते (for मे). T2 -गुणाधिक. — (L. 98) Kumbh. ed. ते (for मे). — (L. 99) T2 M5 ह्यधर्मो; G1 [ऽ]स्त्वधर्मो. Kumbh. ed. न मोक्षधर्मो वा न त्वं (for the prior half). — (L. 100) T2

जरामरणमोक्षार्थं त्वां प्रपन्नोऽस्मि सर्वग ।
विषयैरिन्द्रियैर्वापि न मे भूयः समागमः ।
पृथिवीं यातु मे घ्राणं यातु मे रसनं जलम् ।
रूपं हुताशनं यातु स्पर्शो यातु च मारुतम् ।
श्रोत्रमाकाशमप्येतु मनो वैकारिकं पुनः ।
इन्द्रियाण्यपि संयान्तु स्वासु स्वासु च योनिषु ।
पृथिवी यातु सलिलमापोऽग्निमनलोऽनिलम् ।
वायुराकाशमप्येतु मनश्चाकाश एव च ।
अहंकारं मनो यातु मोहनं सर्वदेहिनाम् ।
अहंकारस्ततो बुद्धिं बुद्धिरव्यक्तमच्युत ।
प्रधाने प्रकृतिं याते गुणसाम्ये व्यवस्थिते ।
वियोगः सर्वकरणैर्गुणैर्भूतैश्च मे भवेत् ।
निष्केवलं पदं देव काङ्क्षेऽहं परमं तव ।
एकीभावस्त्वया मेऽस्तु न मे जन्म भवेत्पुनः ।
त्वद्बुद्धिस्त्वद्गतप्राणस्त्वद्भक्तिस्त्वत्परायणः ।
त्वामेवाहं स्मरिष्यामि मरणे पर्युपस्थिते ।
पूर्वदेहकृता मे तु व्याधयः प्रविशन्तु माम् ।
अर्दयन्तु च दुःखानि ऋणं मे प्रतिमुञ्चतु ।
अनुध्यातोऽसि देवेश न मे जन्म भवेत्पुनः ।
तस्माद्ब्रवीमि कर्माणि ऋणं मे न भवेदिति ।
नोपतिष्ठन्तु मां सर्वे व्याधयः पूर्वसंचिताः ।
अनृणो गन्तुमिच्छामि तद्विष्णोः परमं पदम् ।

श्रीभगवानुवाच ।

अहं भगवतस्तस्य मम चासौ सनातनः ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ।
कर्मेन्द्रियाणि संयम्य पञ्च बुद्धीन्द्रियाणि च ।
दशेन्द्रियाणि मनसि अहंकारे तथा मनः ।
अहंकारं तथा बुद्धौ बुद्धिमात्मनि योजयेत् ।
यतबुद्धीन्द्रियः पश्येद्बुद्ध्या बुध्येत्परात्परम् ।
ममायमिति तस्याहं येन सर्वमिदं ततम् ।
आत्मनात्मनि संयोज्य परमात्मन्यनुस्मरेत् ।
ततो बुद्धेः परं बुद्ध्वा लभते न पुनर्भवम् ।
मरणे समनुप्राप्ते यश्चैवं मामनुस्मरेत् ।
अपि पापसमाचारः स याति परमां गतिम् ।
[ॐ] नमो भगवते तस्मै देहिनां परमात्मने ।
नारायणाय भक्तानामेकनिष्ठाय शाश्वते ।
इमामनुस्मृतिं दिव्यां वैष्णवीं सुसमाहितः ।
स्वपन्विबुध्यंश्च पठेद्यत्र तत्र समभ्यसेत् ।
पौर्णमास्याममावास्यां द्वादश्यां च विशेषतः ।
श्रावयेच्छ्रद्दधानांश्च मद्भक्तांश्च विशेषतः ।
यद्यहंकारमाश्रित्य यज्ञदानतपःक्रियाः ।
कुर्वंस्तत्फलमाप्नोति पुनरावर्तनं तु तत् ।

---

सर्वज्ञः (for सर्वग). — After line 100, Kumbh. ed. ins.:

ईश्वरोऽसि जगन्नाथ ततः परम उच्यसे ।
भक्तानां यद्धितं देव तद्ब्याहि त्रिदशेश्वर ।

— (L. 102) Kumbh ed. गंधो वै (for मे घ्राणं). Kumbh. ed. रसं यातु जलं तथा (for the post. half). — (L. 103) $M_5$ चक्षुर्; Kumbh. ed. तेजो (for रूपं). — (L. 104) $M_5$ शब्द (for श्रोत्रम्). — (L. 105) $G_{1,2}$ संयातु (for संयान्तु). $M_5$ इंद्रियाणां गुणा यांतु (for the prior half). — (L. 106) $G_1$ पृथिवीं. $T_2$ अग्नयो; $G_2$ अनिलो (for अनलो). — (L. 107) $G_1$ Cv आकाशम् (for आकाश). — (L. 108) $G_2$ मोहिनं. — (L. 109) $M_5$ तथा बुद्धि. — (L. 111) $T_1$ गणैर्; $G_1$ गुण- (for गुणैर्). — (L. 112) $D_7$ $T_1$ $G_{1-3,6}$ निष्कैवल्य-; $T_2$ निष्कैवल्यं (for निष्केवलं). $T_2$ पथं (for पदं). Kumbh. ed. तात (for देव). $D_7$ $T_1$ $G_1$ तपः (for तव). — (L. 113) एकीभूतस् (for °भावस्). ❀ Cv: एकीभावः, गोषु गावः एकीभवन्तीतिवत् एकस्थानगतत्वम् । ❀ — $D_7$ om. (hapl.) lines 114-119 — (L. 114) T त्वद्गतस्; $G_{1,2}$ त्वद्गतिस्; $G_{3,6}$ त्वद्भावस्; $M_5$ त्वद्भुक्तस् (for त्वद्भक्तिस्). — (L. 115) $T_2$ गमिष्यामि (for स्मरि°). — (L. 116) $G_1$ पूर्वदेहे (for °देह-). $M_5$ ये (for मे). — (L. 117) $G_1$ मरणे (for ऋणं मे). Kumbh. ed. प्रवि- (for प्रति-). — (L. 119) $T_2$ ऋणभाङ्; $G_1$ रणं मे (for ऋणं मे). — (L. 120) Kumbh. ed. उप- (for नोप-). $G_2$ पूर्वसंचितः. $T_2$ $G_2$ $M_5$ om. the ref. — (L. 122) $G_6$ आवां (for अहं). — (L. 123) $G_1$ प्रणिष्यामि (for प्रणश्यामि). $T_2$ नः प्रणश्यतु. — (L. 124) $G_1$ संगम्य (for संयम्य). — (L. 125) $D_7$ $G_1$ देहेंद्रियाणि. $G_1$ पुनः (for मनः). — (L. 126) $G_2$ अहंकारौ (for °कारं). — (L. 127) $T_2$ यतो बुद्ध्येंद्रियं; $G_1$ यतबुद्धींद्रियं (for °बुद्धीन्द्रियः). $G_1$ पश्ये. $G_1$ बुद्धेत्; $M_5$ बुद्धेः (for बुध्येत्). — Before line 128, $M_5$ ins. श्रीभगवान्. — (L. 128) $G_2$ पदं यामि (for ममायम्). Kumbh. ed. यस्य (for तस्य). — (L. 129) $T_2$ परमात्मानम् (for °त्मनि). — (L. 131) $T_1$ $G_2$ समनुप्राप्तौ ($G_2$ °प्तो). $G_6$ मानुषः (for मामनु-). — Before line 135, $G_6$ ins. भगवान्. — (L. 135) $M_5$ पापनाशिनीं (for सुसमाहितः). — (L. 136) Kumbh. ed. विबुद्धश् (for विबुध्यंश्). $D_7$ T $G_{1,3}$ यत्र यत्र (for यत्र तत्र). — (L. 137) $G_1$ पौर्णिमास्याम्. $T_2$ अमायां च (for °वास्यां). $T_2$ वा (for च). — (L.

अभ्यर्चयन्पितॄन्देवान्पठञ्जुह्वन्बलिं ददत् ।
ज्वलन्नग्निं स्मरेद्यो मां स याति परमां गतिम् ।
यज्ञो दानं तपश्चैव पावनानि शरीरिणाम् ।
यज्ञं दानं तपस्तस्मात्कुर्यादाशीर्विवर्जितः ।
मम इत्येव यो ब्रूयान्मद्भक्तः श्रद्धयान्वितः ।
तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद ।
किं पुनर्ये यजन्ते मां साधका विधिपूर्वकम् ।
श्रद्धावन्तो यतात्मानस्ते मां यान्ति मदाश्रिताः ।
कर्माण्याद्यन्तवन्तीह मद्भक्तो नान्तमश्नुते ।
मामेव तस्माद्देवर्षे ध्याहि नित्यमतन्द्रितः ।
अवाप्स्यसि ततः सिद्धिं द्रक्ष्यस्येव पदं मम ।
अज्ञानाय च यो ज्ञानं दद्याद्धर्मोपदेशनम् ।
कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं न तत्फलम् ।
तस्मात्प्रदेयं साधुभ्यो जन्मबन्धभयापहम् ।
एवं दत्त्वा नरश्रेष्ठ श्रेयो वीर्यं च विन्दति ।
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ।
नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ।

भीष्म उवाच ।

एवं पृष्टः पुरा तेन नारदेन सुरर्षिणा ।
यदुवाच तदा शंभुस्तदुक्तं तव सुव्रत ।
त्वमप्येकमना भूत्वा ध्याहि ज्ञेयं गुणातिगम् ।
भजस्व सर्वभावेन परमात्मानमव्ययम् ।
श्रुत्वैवं नारदो वाक्यं दिव्यं नारायणेरितम् ।
अत्यन्तभक्तिमान्देव एकान्तत्वमुपेयिवान् ।
नारायणमृषिं देवं दश वर्षाण्यनन्यभाक् ।
इदं जपन्वै प्राप्नोति तद्विष्णोः परमं पदम् ।
किं तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्दने ।
नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ।

इमां रहस्यां परमामनुस्मृति-
मधीत्य बुद्धिं लभते च नैष्ठिकीम् ।
विहाय दुःखान्यवमुच्य संकटा-
त्स वीतरागो विचरन्महीमिमाम् ।

Colophon.

17 C

Kumbh. ed. $C_v$. cont. :

युधिष्ठिर उवाच ।

देवासुरमनुष्येषु ऋषिमुख्येषु वा पुनः ।
विष्णोस्तत्त्वं यथाख्यातं को विद्वाननुवेत्ति तत् ।
एतन्मे सर्वमाचक्ष्व न मे तृप्तिर्हि तत्त्वतः ।
वर्तते भरतश्रेष्ठ सर्वज्ञोऽसीति मे मतिः ।

भीष्म उवाच ।

का[? स्मा]रितोऽहं त्वया राजन्यद्वृत्तं च पुरा मम ।
गरुडेन पुरा मह्यं संवादो भूत्सुदुत्तम ।
पुराहं तप आस्थाय वासुदेवपरायणः ।
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ।
गङ्गाद्वीपे समासीनो दश वर्षाणि भारत ।
माता च मम सा देवी जननी लोकपावनी ।
समासीना समीपे मे रक्षणार्थं ममाच्युत ।

138 ) $D_7$ $G_1$ श्रद्धानश्: $G_2$ श्रद्धानानां ( for °धानांश्‌ ). $G_{2,3}$ मद्भक्तानां ( for °क्तांश्च ). — ( L. 140 ) $G_1$ Kumbh. ed न तु ( for तु तत् ). — ( L. 141 ) $G_1$ जिह्वन् ( for जु° ). $D_7$ T $G_3$ ददन् ( for ददत् ). — ( L. 142 ) $M_5$ गच्छेत् ( for याति ). — ( L. 143 ) $D_7$ $G_1$ om. hapl. from तप up to तप ( in line 144 ). $M_5$ तपश्चेति ( for °श्चैव ). T $G_{2,3,6}$ $M_5$ मनीषिणां. — ( L. 144 ) $D_7$ आशी-; $G_3$ आशा- ( for आशीर्- ). $T_2$ -विवर्जितं ; $G_1$ विशेषतः ( for -विवर्जितः ). — ( L. 146 ) $G_2$ श्वपचस्य ( for श्वपाकस्य ). — ( L. 147 ) $D_7$ $T_1$ यजंतो ( for यजन्ते ). $M_5$ साधकं ( for साधका ). — ( L. 148 ) $G_2$ दमाश्रिताः ( for मदा° ). — ( L. 149 ) मदुक्ता ( for मद्भक्तो ). Kumbh. ed. [ऽ]मृतम् ( for नान्तम् ). — ( L. 150 ) $T_2$ नित्यं ( for तस्माद् ). $D_7$ ध्यायन् ( for ध्याहि ). — ( L. 151 ) $G_2$ कामं ( for सिद्धिं ). $T_2$ $G_3$ $M_5$ द्रक्ष्य- ( $M_5$ °क्ष )से च; $G_2$ रक्षसे च ( for द्रक्ष्यस्येव ). $G_3$ परं ( for पदं ). — ( L. 152 ) Kumbh ed. अज्ञानिने ( for °नाय ). $G_2$ transp. ज्ञानं and दद्यात्. $T_2$ धर्मोपदेशतः ( for °नम् ). — ( L 153 ) $T_1$ $G_{1-3,6}$ ततः फलं ( for न तत्फलम् ). — ( L. 158 ) $D_7$ $T_1$ $G_{1,2,6}$ महर्षिणा. — ( L 159 ) $T_2$ $G_2$ पुरा शंभुस्; Kumbh. ed. तदासौ मो ( for तदा शंभुस् ). — ( L. 160 ) $D_7$ $T_1$ $G_{1,3,6}$ याहि ( for ध्याहि ). $T_2$ ध्येय ; $G_{3,3}$ ज्ञेय- ( for ज्ञेयं ). $D_7$ गुणातीतिं ; $T_1$ $G_{3,6}$ °गतिं ; $T_2$ °न्वितं ( for °तिगम् ). — ( L. 162 ) $T_2$ $G_2$ एतं ; $M_5$ इदं ; Kumbh. ed. एतत् ( for एवं ). $G_1$ दिवं. — ( L. 163 ) $D_7$ $T_1$ $G_{2,6}$ देवम्. $D_7$ T $G_{3,6}$ एकांतित्वम्. — ( L 164 ) $G_2$ पुराणर्षिं ( for ऋषिं देवं ). — ( L. 170 ) $D_7$ T $G_{1-3,6}$ संकटान्. — ( L 171 ) Kumbh. ed. स वीतरागो विगतज्वरः सुखी. Colophon : $D_7$ $T_1$ $G_{3,6}$ $M_5$ अनुस्मृतिः.

तस्मिन्कालेऽद्भुतः श्रीमान्सर्ववेदमयः प्रभुः ।
सुपर्णः पततां श्रेष्ठो मेरुमन्दरसंनिभः ।
आजगाम विशुद्धात्मा गङ्गां द्रष्टुं महायशाः ।
तमागतं महात्मानं प्रत्युद्गम्याहमर्थितः ।
प्रणिपत्य यथान्यायं कृताञ्जलिरवस्थितः ।
सोऽपि देवो महाभागामभिनन्द्य च जाह्नवीम् ।
तया च पूजितः श्रीमानुपोपाविशदासने ।
ततः कथान्तरे तं वै वचनं चेदमब्रवम् ।
वेदवेद महावीर्य वैनतेय महाबल ।
नारायणं हृषीकेशं सहमानोऽनिशं हरिम् ।
जानासि तं यथा वक्तुं यादृग्भूतो जनार्दनः ।
ममापि तस्य सद्भावं वक्तुमर्हसि सत्तम ।

गरुड उवाच ।

शृणु भीष्म यथान्यायं पुरा त्व[?त्वा]मिह सत्तमाः ।
अनेके मुनयः सिद्धा मानसोत्तरवासिनः ।
पप्रच्छुर्मां महाप्राज्ञा वासुदेवपरायणाः ।
पक्षीन्द्र वासुदेवस्य तत्त्वं वेत्सि परं पदम् ।
त्वया समो न तस्यास्ति संनिकृष्टप्रियोऽपि च ।
तेषामहं वचः श्रुत्वा प्रणिपत्य महाहरिम् ।
अब्रवं च यथावृत्तं मम नारायणस्य च ।
शृणुध्वं मुनिशार्दूला हृत्वा सोममहं पुरा ।
आकाशे पतमानस्तु वाक्यं तत्र शृणोमि वै ।
साधु साधु महाबाहो प्रीतोऽस्मि तव दर्शनात् ।
वृणीष्व वचनं मत्तः पक्षीन्द्र गरुडाधुना ।
त्वामहं भक्तितत्त्वज्ञो ब्रवै वचनमुत्तमम् ।
इत्याह स ध्रुवं तत्र मामाह भगवान्पुनः ।
ऋषिरसि महावीर्य न मां जानाति वा मयि ।
असूयति च मां मूढस्तच्छ्रुत्वा गर्वमास्थितः ।
अहं देवनिकायानां मध्ये वचनमब्रवम् ।
ऋषे पूर्वं वरं मत्तस्त्वं वृणीष्व ततो ह्यहम् ।
वृणे त्वत्तो वरं पश्चादित्येवं मुनिसत्तमाः ।
यस्मात्त्वां भगवान्देवः श्रीमाञ्श्रीवत्सलक्षणः ।
अद्य पश्यति पक्षीन्द्र वाहनं भव मे सदा ।
वृणेऽहं वरमेतद्धि त्वत्तोऽद्य पतगेश्वर ।
तथेति तं वीक्ष्य मातामनहंकारमास्थितम्(sic) ।
जेतुकामो ह्यहं विष्णुं मायया मायिनं हरिम् ।
त्वत्तो ह्यहं वृणे त्वद्य वरमृषिवरोत्तम ।
तवोपरिष्टात्स्थास्यामि वरमेतत्प्रयच्छ मे ।
तथेति च हसन्प्राह हरिर्नारायणः प्रभुः ।
ध्वजं च मे भव सदा त्वमेव विहगेश्वर ।
उपरिष्टात्स्थितिस्तेऽस्तु मम पक्षीन्द्र सर्वदा ।
इत्युक्त्वा भगवान्देवः शङ्खचक्रगदाधरः ।
सहस्रचरणः श्रीमान्सहस्रादित्यसंनिभः ।
सहस्रशीर्षा पुरुषः सहस्रनयनो महान् ।
सहस्रमकुटोऽचिन्त्यः सहस्रवदनो विभुः ।
विद्युन्मालानिभैर्दिव्यैर्नानाभरणराजिभिः ।
क्वचित्संदृश्यमानस्तु चतुर्बाहुः क्वचिद्धरिः ।
क्वचिज्ज्योतिर्मयोऽचिन्त्यः क्वचित्स्कन्धे समाहितः ।
एवं मम जयन्देवस्तत्रैवान्तरधीयत ।
ततोऽहं विस्मयापन्नः कृत्वा कार्यमनुत्तमम् ।
अस्या विमुच्य जननीं मया सह मुनीश्वराः ।
अचिन्त्योऽयमहं भूयो कोऽसौ मामब्रवीत्पुरा ।
कीदृग्विधः स भगवानिति मत्वा तमास्थितः ।
अनन्तरं देवदेवं स्कन्धे मम समाश्रितम् ।
अद्राक्षं पुण्डरीकाक्षं वहमानोऽहमद्भुतम् ।
अवशस्तस्य भावेन यत्र यत्र स चेच्छति ।
विस्मयापन्नहृदयो ह्यहं किमिति चिन्तयन् ।
अन्तर्जलमहं सर्वं वहमानोऽगमं पुनः ।
सेन्द्रैर्देवैर्महाभागैर्ब्रह्माद्यैः कल्पजीविभिः ।
स्तूयमानो ह्यहमपि तैस्तैरभ्यर्चितः पृथक् ।
क्षीरोदस्योत्तरे कूले दिव्ये मणिमये शुभे ।
वैकुण्ठं नाम सदनं हरेस्तस्य महात्मनः ।
दिव्यं तेजोमयं श्रीमदचिन्त्यममरैरपि ।
तेजोनिलमयैः स्तम्भैर्नानासंस्थानसंस्थितैः ।
विभूषितं हिरण्येन भास्वरेण समन्ततः ।
दिव्यं ज्योतिःसमायुक्तं गीतवादित्रशोभितम् ।
शृणोमि शब्दं तत्राहं न पश्यामि शरीरिणम् ।
न च स्थलं न चान्यच्च पादयोस्तं समन्ततः ।
वेपमानो ह्यहं तत्र विष्ठितोऽहं कृताञ्जलिः ।
ततो ब्रह्मादयो देवा लोकपालास्तथैव च ।
सनन्दनाद्या मुनयस्तथान्ये परजीविनः ।
प्राप्तास्तत्र सभाद्वारि देवगन्धर्वसत्तमाः ।
ब्रह्माणं पुरतः कृत्वा कृताञ्जलिपुटास्तदा ।
ततस्तदन्तरे तस्मिन्क्षीरोदार्णवशीकरैः ।
बोध्यमानो महाविष्णुराविर्भूत इवाबभौ ।
फणासहस्रमालाढ्यं शेषमव्यक्तसंस्थितम् ।
पश्याम्यहं मुदाकाशे यस्योपरि जनार्दनम् ।

दीर्घवृत्तैः समैः पीनैः केयूरवलयोज्ज्वलैः ।
चतुर्भिर्बाहुभिर्युक्तं * * * * * * * * ।
पीताम्बरेण संवीतं कौस्तुभेन विराजितम् ।
वक्षःस्थलेन संयुक्तं पद्मयाधिष्ठितेन च ।
ईषदुन्मीलिताक्षं तं सर्वकारणकारणम् ।
क्षीरोदस्योपरि बभौ नीलाभ्रं परमं यथा ।
न कश्चिद्वदते कश्चिन्न व्याहरति कश्चन ।
ब्रह्मादिस्तम्बपर्यन्तं मा शब्दमिति रोषितम् ।
भ्रुकुटीकुटिलाक्षास्ते नानाभूतगणाः स्थिताः ।
ततोऽचिन्त्यो हरिः श्रीमानालोक्य च पितामहम् ।
कृत्वा च प्रस्थितं तत्र जगतां हितकाम्यया ।
गच्छध्वमिति मामुक्त्वा गरुडेत्याह मां ततः ।
ततोऽहं प्रणिपत्याग्रे कृताञ्जलिरवस्थितः ।
आगच्छेति च मामुक्त्वा पूर्वोत्तरपथं गतः ।
अतीव मृदुभावेन गच्छन्निव स दृश्यते ।
अयुतं नियुतं चाहं प्रयुतं चार्बुदं तथा ।
पतमानोऽहमनिशं योजनानि ततस्ततः ।
ननु तत्त्वामहं भक्तो विष्ठितोऽस्मि प्रशास्तु नः ।
आगच्छ गरुडेत्येवं पुनराह स माधवः ।
ततो भूयो ह्यहं पातं पतमानो विहायसम् ।
आजगाम ततो घोरं शतकोटिसमावृतम् ।
तामसानीव भूतानि पर्वताभानि तत्र ह ।
समानानीव पद्मानि ततोऽहं भीत आस्थितः ।
ततो मां किंकरो घोरः शतयोजनमायतम् ।
निगृह्य पाणिना तस्माच्चिक्षेप च स लोष्टवत् ।
तत्तमोऽहमतिक्रम्य ह्यापं चैव विहायसम् ।
हुंकारघोषांस्तत्राहमशनीपातसंनिभान् ।
कर्णमूले ह्यशृणवं ततो भूतैः समास्थितः ।
ततोऽहं देवदेवेश त्राहि मां पुष्करेक्षण ।
इत्यब्रवमहं तत्र ततो विष्णुरुवाच माम् ।
सुषिरस्य मुखे कश्चिन्मां चिक्षेप भयंकरः ।
अतीतोऽहं क्षणादग्निमपश्यं वायुमण्डलम् ।
आकाशमिव संप्रेक्ष्य क्षेमुकाममुपागतः ।
तत्राहं दुःखितो भूतः क्रोशमानो ह्यवस्थितः ।
क्षणान्तरेण घोरेण क्रुद्धो हि परमात्मना ।
स्वपक्षराजिना दृष्ट्वा मां चिक्षेप भयंकरः ।
* * * गरुडकुलं सहस्रादित्यसंनिभम् ।
मां दृष्ट्वाप्यथ संस्थेऽथ ह्यल्पकालोऽतिदुर्बलः ।
अहो विहंगमः प्राप्त इति विस्मयमानसाः ।
मां दृष्ट्वोचुरहं तत्र पश्यामि गरुडध्वजम् ।
सहस्रयोजनायामं सहस्रादित्यवर्चसम् ।
सहस्रगरुडारूढं गरुडास्ते महाबलाः ।
अत्याश्चर्यमिमं देव वपुषास्मत्कुलोद्भवः ।
स्वल्पप्राणः स्वल्पकायः कोऽसौ पक्षी इहागतः ।
तच्छ्रुत्वाहं नष्टगर्वो भीतो लज्जासमन्वितः ।
स्वयं बुद्धश्च संविग्नस्ततो ह्यशृणवं पुनः ।
आगच्छ गरुडेत्येव ततोऽहं यानमास्थितः ।
परार्ध्यं च ततो गत्वा योजनानां शतं पुनः ।
तत्रापश्यमहं यो वै ब्रह्माणं परमेष्ठिनम् ।
तत्रापि चापरं तत्र शतकोटिपितामहान् ।
पुनरेहीत्युवाचोच्चैर्भगवान्मधुसूदनः ।
महाकुलं ततोऽपश्यं प्रमाणानि तमव्ययम् ।
कपित्थफलसंकाशैरण्डाकारैः समाश्रितम् ।
तत्र स्थितो हरिः श्रीमानण्डमेकं बिभेद ह ।
महद्भूतं हि मां गृह्य दत्त्वा वै प्राक्षिपत्पुनः ।
तन्मध्ये सागरान्सप्त ब्रह्माणं च तथा सुरान् ।
पश्याम्यहं यथायोगं मातरं स्वकुलं तथा ।
एवं मयानुभूतं हि तत्त्वान्वेषणकाङ्क्षिणा ।
शिविकासदृशं मां वै पश्यध्वं मुनिसत्तमाः ।
इत्येवमब्रवं विप्रान्भीष्म यन्मे पुराभवत् ।
तत्ते सर्वं यथान्यायमुक्तवानस्मि सत्तम ।
योगिनस्तं प्रपश्यन्ति ज्ञानं दृष्ट्वा परं हरिम् ।
नान्यथा शक्यरूपोऽसौ ज्ञानगम्यः परः पुमान् ।
अनन्यया च भक्त्या च प्राप्तुं शक्यो महाहरिः ।

भीष्म उवाच ।

इत्येवमुक्त्वा भगवान्सुपर्णः पक्षिराट्प्रभुः ।
आमन्त्र्य जननीं मे वै तत्रैवान्तरधीयत ।
तस्माद्राजेन्द्र सर्वात्मा वासुदेवः प्रधानकृत् ।
**ज्ञानेन भक्त्या सुलभो नान्यथेति मतिर्मम ।**

**Colophon.**

(L. 140) Kumbh. ed. -संकाशम् (for °शैर्). ❀ **Cv**: कपित्थपदेन संसाराख्यो वृक्ष उच्यते । फलसंकाशैः, अण्डानामाकारैः । ❀ —(L 146) ❀ **Cv**: शिविकासदृशमित्यनेन स्वस्य भगवत्प्रेरणां विना गन्तुं शक्तिरेव नास्तीति सूचयति । ❀ —Colophon. *Adhy. name*: गरुडोक्तभगवन्महिमा.

## 18

After 12. 211, Kumbh ed. Cv. ins.:

भीष्म उवाच ।

जनको नरदेवस्तु ज्ञापितः परमर्षिणा ।
पुनरेवानुपप्रच्छ सांपराये भवाभवौ ।
भगवन्यदिदं प्रेत्य संज्ञा भवति कस्यचित् ।
एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ।
विवादादेव सिद्धोऽसौ कारणस्येव वेदना ।
चेतनो विद्यते ह्यत्र हैतुकं च मनोगतम् ।
आगमादेव सिद्धोऽसौ स्वतःसिद्ध इति श्रुतिः ।
वर्तेते पृथगन्योन्यं न ह्यपाश्रित्य कर्मसु ।
चेतनो ह्यंशवस्तत्र स्वमूर्तं धारयन्त्यतः ।
स्वभावं पौरुषं कर्म ह्यात्मानं तमुपाश्रिताः ।
तमाश्रित्य प्रवर्तन्ते देहिनो देहबन्धनाः ।
गुणज्ञानमभिज्ञानं यस्य लिङ्गा न शब्दवत् ।
पृथिव्यादिषु भूतेषु तत्तदाहुर्निदर्शनम् ।
आत्मासौ वर्तते भिन्नस्तत्र तत्र समन्वितः ।
परमात्मा तथैवैको देहेऽस्मिन्निति वै श्रुतिः ।
आकाशं वायुरूष्मा च स्नेहो यच्चापि पार्थिवम् ।
यथा त्रिधा प्रवर्तन्ते तथासौ पुरुषः स्मृतः ।
पयस्यन्तर्हितं यद्वत्तद्वद्व्याप्तं महात्मकम् ।
पूर्वं नैश्वर्ययोगेन तस्मादेतन्न शेषवान् ।
शब्दः कालः क्रिया देहो ममैकस्यैव कल्पना ।
स्वभावं तन्मयं त्वेतन्मायारूपं तु भेदवत् ।
नानाख्यं परमं शुद्धं निर्विकल्पं परात्मकम् ।
लिङ्गादि देवमध्यास्ते ज्ञानं देवस्य तत्तथा ।
चिन्मयोऽयं हि नादाख्यः शब्दश्चासौ मनो महान् ।
गतिमानुत संधत्ते वर्णवत्तत्पदान्वितम् ।
कायो नास्ति च तेषां वै अवकाशस्तथा परम् ।
एते नोढा इति चाख्याताः सर्वे ते धर्मदूषकाः ।
अनुबन्धान्न विज्ञानं ज्ञानतो ध्रुवमव्ययम् ।
नानाभेदविकल्पेन येषामात्मा स्मृतः सदा ।
प्रकृतेरपरस्तेषां बहवो ह्यात्मवादिनः ।
विरोधो ह्यात्मसन्मायां न तेषां सिद्ध एव हि ।
अन्यदा च गृहीतैः* वेदबाह्यास्ततः स्मृताः ।
एकानेकात्मकं तेषां प्रतिषेधो हि भेदनुत् ।
तस्माद्वेदस्य हृदयमद्वैध्यमिति विद्धि तत् ।
वेदादृष्टेरयं लोकः सर्वार्थेषु प्रवर्तते ।
तस्माच्च स्मृतयो जाताः सेतिहासाः पृथग्विधाः ।
न यत्र साध्यं तद्ब्रह्म नादिमध्यं न चान्तवत् ।
इन्द्रियाणि सभूतानि परा च प्रकृतिर्मनः ।
आत्मा च परमः शुद्धः प्रोक्तोऽसौ परमः पुमान् ।
उत्पत्तिलक्षणं चेदं विपरीतमथोभयोः ।
यो वेत्ति प्रकृतिं नित्यं तथा चैवात्मनस्तु ताम् ।
प्रदहत्येष कर्माख्यं दावोद्भूत इवानलः ।
चिन्मात्रपरमः शुद्धः सर्वाकृतिषु वर्तते ।
आकाशकल्पं विमलं नानाशक्तिसमन्वितम् ।
तापनं सर्वभूतानां ज्योतिषां मध्यमस्थितिम् ।
दुःखमास्ते स निर्दुःखस्तद्विद्वान्न च लिप्यति ।
असावश्नाति यद्वत्तद्भ्रमरोऽश्नाति यन्मधु ।
एवमेष महानात्मा नात्मा तदवबुध्यते ।
एवंभूतस्त्वमित्यत्र स्वाधीतो बुध्यते परम् ।
बुधस्य बोधनं तत्र क्रियते सद्भिरित्युत ।

---

18

(L. 1–4) = 12. 212. 1–2. —(L. 6) ❀ Cv: हैतुकं, पुण्यपापादिसमूहः । ❀ —(L. 10) Kumbh. ed. उपाश्रितं; Cv (gloss: आत्मानं, परमात्मानम् आश्रिताः, तदधीना इत्यर्थः) °श्रिताः (as above). —(L. 12) Kumbh. ed. तस्य; Cv (gloss: परमात्मनः) यस्य (as above). Kumbh. ed. लिंगानु-; Cv: (gloss: लिङ्गा ज्ञापका न। शब्दवत्, श्रुतिवत्) लिङ्गा न (as above). —(L. 17) ❀ Cv: पार्थिवदेहे पृथिव्यां बहुलम्, आप्ये अपां, तैजसे तेजस इति त्रिधा । ❀ —(L. 18) Cv: पयसि अन्तर्हितम्, घृतमिति योग्यपदार्थाध्याहारः। ❀ —(L. 21) Kumbh. ed. त्वेदं; Cv (gloss: एतन्मायारूपं प्रकृतिरूपं जगत्, तन्मयं तेन नारायणेन व्याप्तं, भेदवत् भेदयुक्तम्) त्वेतन् (as above). —(L. 28) Kumbh. ed अबंधनमविज्ञानाद् (for the prior half). ❀ Cv: अनुबन्धात्, देहे एव स्नेहात्, विज्ञानं विशिष्टं ज्ञानम् । ❀ Kumbh. ed. ज्ञानं तद्ध्रुवमव्ययं (for the post. half). —(L. 30) Kumbh. ed. [ऽ]पि (for हि). —(L 33) ❀ Cv: भेदनुत्, भेदसाधकः। 'नुद प्रेरणे' इति धातुः । ❀ —(L. 34) Cv (gloss: द्विप्रकारसंबन्धि, चार्वाकमतसंबन्धि, अन्यमतसंबन्धि च न) न द्वैध्यम् (for अद्वैध्यम्). —(L. 38) Kumbh. ed. इंद्रियाणि च भूरीणि (for the prior half). —(L 40) ❀ Cv: विपरीतं, उत्पत्तिलक्षणमनुत्पत्तिलक्षणं च । उभयोः, जडजीवयोः । ❀ —(L. 46) Kumbh. ed. अस्ति स (for आस्ते स). ❀ Cv: सः परमात्मा निर्दुःखः, दुःखं दुःखभरितं देहं, आस्ते साक्षितया आस्ते । ❀ —(L. 48) Kumbh. ed. नात्मानमवबुध्यते (for the post. half). ❀ Cv: आत्मा, जीवात्मा । ❀ —(L 49) Kumbh. ed. स्वाधितो· Cv (gloss: स्वकीयैर्गुरुभिरधीतः) स्वाधीतो (as above).

न बुधस्येति वै कश्चिन्न तथावच्छृणुष्व मे ।
शोकमस्य न गत्वा ते शास्त्राणां शास्त्रदस्यवः ।
लोकं निघ्नन्ति संभिन्ना ज्ञातिनोऽत्र वदन्त्युत ।
एवं तस्य विभोः कृत्यं धातुरस्य महात्मनः ।
क्षमन्ति ते महात्मानः सर्वद्वंद्वविवर्जिताः ।
अतोऽन्यथा महात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ।
तस्य संयोगयोगेन शुचिरप्यशुचिर्भवेत् ।
अशुचिश्च शुचिश्चापि ज्ञानाद्देहादयो यथा ।
दृश्यं न चैव दृष्टं स्याद्दृष्टं दृश्यं तु नैव च ।
अतीतत्रितयः सिद्धो ज्ञानरूपेण सर्वदा ।
एवं न प्रतिपद्यन्ते रागमोहमदान्विताः ।
वेदबाह्या दुरात्मानः संसारे दुःखभागिनः ।
आगमानुगतज्ञाना बुद्धियुक्ता भवन्ति ते ।
बुद्ध्या भवति बुद्ध्यात्तं यद्बुद्धं चात्मरूपवत् ।
तमस्यन्धे न संदेहात्परं यान्ति न संशयः ।
नित्यनैमित्तिकान्कृत्वा पापहानिमवाप्य च ।
शुद्धसत्त्वा महात्मानो ज्ञाननिर्धूतकल्मषाः ।
असक्ताः परिवर्तन्ते संसरन्त्यथ वायुवत् ।
न युज्यन्तेऽथ वा क्लेशैरहंभावोद्भवैः सह ।
इतस्ततः समाहृत्य ज्ञानं निर्वर्णयन्त्युत ।
ज्ञानान्वितस्तमो हन्यादर्कवत्स महामतिः ।
एवमात्मानमन्वीक्ष्य नानादुःखसमन्वितम् ।
देहं पङ्कमले मग्नं निर्मलं परमार्थतः ।
तमेव सर्वदुःखात्तु मोचयेत्परमात्मवान् ।
ब्रह्मचर्यव्रतोपेतः सर्वसङ्गबहिष्कृतः ।
लघ्वाहारो विशुद्धात्मा परं निर्वाणमृच्छति ।
इन्द्रियाणि मनो वायुः शोणितं मांसमस्थि च ।
आनुपूर्व्याद्विनश्यन्ति स्वं धातुमुपयान्ति च ।
कारणानुगतं कार्यं यदि तच्च विनश्यति ।
अलिङ्गस्य कथं लिङ्गं युज्यते तन्मृषा दृढम् ।
न त्वेव हेतवः सन्ति ये केचिन्मूर्तिसंस्थिताः ।
अमर्त्यस्य च मर्त्येन सामान्यं नोपपद्यते ।
लोकदृष्टो यथा जातेः स्वेदजः पुरुषः स्त्रियाम् ।
कृतानुस्मरणात्सिद्धो वेदगम्यः परः पुमान् ।
प्रत्यक्षानुगतो वेदो नामहेतुभिरिष्यते ।
यथा शाखा हि वै शाखा तरोः संबध्यते तदा ।
श्रुत्या तथा परोऽप्यात्मा दृश्यते सोऽप्यलिङ्गवान् ।
अलिङ्गसाध्यं तद्ब्रह्म बहवः सन्ति हेतवः ।
लोकयात्राविधानं च दानधर्मफलागमः ।
तदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ।
इति सम्यङ्मनस्येते बहवः सन्ति हेतवः ।
एतदस्तीदमस्तीति न किंचित्प्रतिदृश्यते ।
तेषां विमृशतामेवं तत्तत्समभिधावताम् ।
क्वचिन्निविशते बुद्धिस्तत्र जीर्यति वृक्षवत् ।
एवमर्थैरनर्थैश्च दुःखिताः सर्वजन्तवः ।
आगमैरपकृष्यन्ति हस्तिनो हस्तिपैर्यथा ।
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।

अर्थांस्तथात्यन्तदुःखावहांश्च
लिप्सन्त एके बहवो विशुष्काः ।
महत्तरं दुःखमभिप्रपन्ना
हित्वा सुखं मृत्युवशं प्रयान्ति ।
विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मन्त्रपरिग्रहैश्च ।
विहाय यो गच्छति सर्वमेव
क्षणेन गत्वा न निवर्तते च ।
खं भूमितोयानलवायवो हि
सदा शरीरं प्रतिपालयन्ति ।
इतीदमालक्ष्य कुतो रतिर्भवे-
द्विनाशिनो ह्यस्य न कर्म विद्यते ।
इदमनुपधिवाक्यमच्छलं
परमनिरामयमात्मसाक्षिकम् ।
नरपतिरनुवीक्ष्य विस्मितः
पुनरनुयोक्तुमिदं प्रचक्रमे ।

Colophon.

— (L. 54) Cv (gloss: हे जनक) विभो (for विभोः). — (L. 57–58) ± 1. 68. 26; Manu. 4 255. — (L. 61) Kumbh. ed. अतीतत्रितयाः सिद्धा (for the prior half). — (L 65) Kumbh. ed. बुद्ध्या त्वं (for बुद्ध्यात्तं). — (L. 75) ❀ Cv: परमात्मवान्, परमात्मज्ञानवान्। ❀ — (L 78–79) ± 12. 211. 40. — (L. 81) ❀ Cv: अलिङ्गस्य, स्वभावतो लिङ्गदेहवर्जितस्य। ❀ — (L. 82–83) ± 12. 211. 30. — (L. 90–115) = 12. 211. 41*–48*. — (L 89) ❀ Cv: बहवः, युगपदणुत्वमहत्त्वादयः। ❀ — (L 93) ❀ Cv: एतद्, पारलौकिकम्। इदं, ऐहिकम्। ❀ — (L. 98–99) = Ādiparvan, 693*, lines 6–7; 840*, lines 1–2; Śāntiparvan 616*; Viṣṇu P. 4. 10. 9–10; Manu. 2. 94. — Colophon. *Adhy. name*: जनकपञ्चशिखसंवादः.

## 19

After 12. 212, Kumbh. ed, Cv. ins.:

युधिष्ठिर उवाच ।

किंकारणं महाप्राज्ञ दह्यमानश्च मैथिलः ।
मिथिलां नेह धर्मात्मा प्राह वीक्ष्य विदाहिताम् ।

भीष्म उवाच ।

श्रूयतां नृपशार्दूल यदर्थं दीपिता पुरा ।
वह्निना दीपिता सा तु तन्मे शृणु महामते ।
जनको जनदेवस्तु कर्माण्याधाय चात्मनि ।
सर्वभावमनुप्राप्य भावेन विचचार सः ।
यजन्ददंस्तथा जुह्वन्पालयन्पृथिवीमिमाम् ।
अध्यात्मविन्महाप्राज्ञस्तन्मयत्वेन निष्ठितः ।
स तस्य हृदि संकल्पं ज्ञातुमैच्छत्स्वयं प्रभुः ।
सर्वलोकाधिपस्तत्र द्विजरूपेण संयुतः ।
मिथिलायां महाबुद्धिर्व्यलीकं किंचिदाचरन् ।
स गृहीत्वा द्विजश्रेष्ठैर्नृपाय प्रतिवेदितः ।
अपराधं समुद्दिश्य तं राजा प्रत्यभाषत ।
न त्वां ब्राह्मण दण्डेन नियोक्ष्यामि कथंचन ।
मम राज्याद्विनिर्गच्छ यावत्सीमा भुवो मम ।
तच्छ्रुत्वा ब्राह्मणो गत्वा राजानं प्रत्युवाच ह ।
करिष्ये वचनं राजन्ब्रवीहि मम जानतः ।
का सीमा तव भूमेस्तु ब्रूहि धर्मं समाद्य वै ।
तच्छ्रुत्वा मैथिलो राजा लज्जयावनताननः ।
नोवाच वचनं विप्रं तत्त्वबुद्ध्या समीक्ष्य तत् ।
पुनः पुनश्च तं विप्रश्चोदयामास सत्वरम् ।
ब्रूहि राजेन्द्र गच्छामि तव राज्याद्विवासितः ।
ततो नृपो विचार्यैवमाह ब्राह्मणपुंगवम् ।
आवासो वा न मेऽस्त्यत्र सर्वा वा पृथिवी मम ।
गच्छ वा तिष्ठ वा ब्रह्मन्निति मे निश्चिता मतिः ।
इत्युक्तः स तथा तेन मैथिलेन द्विजोत्तमः ।
अब्रवीत्तं महात्मानं राजानं मन्त्रिभिर्वृतम् ।
तमेवं पद्मनाभस्य नित्यं पक्षपदाहितम् ।
अहो सिद्धार्थरूपोऽसि गमिष्ये स्वस्ति तेऽस्तु वै ।
इत्युक्त्वा प्रययौ विप्रस्तज्जिज्ञासुर्द्विजोत्तमः ।
अदहच्चाग्निना तस्य मिथिलां भगवान्स्वयम् ।
प्रदीप्यमानां मिथिलां दृष्ट्वा राजा न कम्पितः ।
जनैः स परिपृष्टस्तु वाक्यमेतदुवाच ह ।
अनन्तं बत मे वित्तं भाव्यं मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे किंचन दह्यते ।
तदस्य भाषमाणस्य श्रुत्वा श्रुत्वा हृदि स्थितम् ।
पुनः संजीवयामास मिथिलां तां द्विजोत्तमः ।
आत्मानं दर्शयामास वरं चास्मै ददौ पुनः ।
धर्मे तिष्ठतु सद्भावो बुद्धिस्तेऽर्थे नराधिप ।
सत्ये तिष्ठस्व निर्विण्णः स्वस्ति तेऽस्तु व्रजाम्यहम् ।
इत्युक्त्वा भगवांश्चैनं तत्रैवान्तरधीयत ।
एतत्ते कथितं राजन्किं भूयः श्रोतुमिच्छसि ।

Colophon.

युधिष्ठिर उवाच ।

अस्ति कश्चिद्यदि विभो सदारो नियतो गृहे ।
अतीतसर्वसंसारः सर्वद्वंद्वविवर्जितः ।
तं मे ब्रूहि महाप्राज्ञ दुर्लभः पुरुषो महान् ।

भीष्म उवाच ।

शृणु राजन्यथावृत्तं यन्मां त्वं पृष्टवानसि ।
इतिहासमिमं शुद्धं संसारभयभेषजम् ।
देवलो नाम विप्रर्षिः सर्वशास्त्रार्थकोविदः ।
क्रियावान्धार्मिको नित्यं देवब्राह्मणपूजकः ।
सुता सुवर्चला नाम तस्य कल्याणलक्षणा ।
नातिह्रस्वा नातिकृशा नातिदीर्घा यशस्विनी ।
प्रदानसमयं प्राप्ता पिता तस्य ह्यचिन्तयत् ।
अस्याः पतिः कुतो वेति ब्राह्मणः श्रोत्रियः परः ।
विद्वान्विप्रो ह्यकुटुम्बः प्रियवादी महातपाः ।
इत्येवं चिन्तयानं तं रहस्याह सुवर्चला ।
अन्धाय मां महाप्राज्ञ देह्यनन्धाय वै पितः ।
एवं स्मर सदा विद्वन्ममेदं प्रार्थितं मुने ।

पितोवाच ।

न शक्यं प्रार्थितं वत्से त्वयाद्य प्रतिभाति मे ।
अन्धतानन्धता चेति विकारो मम जायते ।
उन्मत्तेवाशुभं वाक्यं भाषसे शुभलोचने ।

---

19

(L. 28) Kumbh. ed. पक्षपदाहितः; **Cv** (gloss : पक्षपदं, स्थानं आहितं, कृतं येन सः । पद्मनाभस्य पक्षपातीत्यर्थः) °हितम् (as above). —(L. 34-35) ± 12. 17. 18; 171. 56; 212. 50; 268. 4; Jātaka 549, Gāthā 125; Dhammapada 200; Uttarādhyayana Sūtra 9. 14. ❀ **Cv**: भाव्यं, भवितुं योग्यम् । ❀ —(L. 39) ❀ **Cv**: सद्भावः, सतः परमात्मनो भवतीति सद्भावः । ❀ — Colophon. *Adhy. name :* जनकोपाख्यानं.

सुवर्चलोवाच ।

नाहमुन्मत्तभूताद्य बुद्धिपूर्वं ब्रवीमि ते ।
विद्यते चेत्पतिस्तादृक्स मां भरति वेदवित् ।
येभ्यस्त्वं मन्यसे दातुं मामिहानय तान्द्विजान् ।
तादृशं तं पतिं तेषु वरयिष्ये यथातथम् ।

भीष्म उवाच ।

तथेति चोक्त्वा तां कन्यामृषिः शिष्यानुवाच ह
ब्राह्मणान्वेदसंपन्नान्योनिगोत्रविशोधितान् ।
मातृतः पितृतः शुद्धाञ्शुद्धानाचारतः शुभान् ।
अरोगान्बुद्धिसंपन्नाञ्शीलसत्त्वगुणान्वितान् ।
असंकीर्णांश्च गोत्रेषु वेदव्रतसमन्वितान् ।
ब्राह्मणान्स्नातकाञ्शीघ्रं मातापितृसमन्वितान् ।
निवेष्टुकामान्कन्यां मे दृष्ट्वानयत शिष्यकाः ।
तच्छ्रुत्वा त्वरिताः शिष्या ह्याश्रमेषु ततस्ततः ।
ग्रामेषु च ततो गत्वा ब्राह्मणेभ्यो न्यवेदयन् ।
ऋषेः प्रभावं मत्वा ते कन्यायाश्च द्विजोत्तमाः ।
अनेकमुनयो राजन्संप्राप्ता देवलाश्रमम् ।
अनुमान्य यथान्यायं मुनीन्मुनिकुमारकान् ।
अभ्यर्च्य विधिवत्तत्र कन्यां प्राह पिता महान् ।
एतेऽपि मुनयो वत्से स्वपुत्रैकमता इह ।
वेदवेदाङ्गसंपन्नाः कुलीनाः शीलसंमताः ।
येऽमी तेषु वरं भद्रे त्वमिच्छसि महाव्रतम् ।
तं कुमारं वृणीष्वाद्य तस्मै दास्यामहं शुभे ।
तथेति चोक्त्वा कल्याणी तप्तहेमनिभा तदा ।
सर्वलक्षणसंपन्ना वाक्यमाह यशस्विनी ।
विप्राणां समितीर्दृष्ट्वा प्रणिपत्य तपोधनान् ।
यद्यस्ति समितौ विप्रो ह्यन्धोऽनन्धः स मे वरः ।
तच्छ्रुत्वा मुनयस्तत्र वीक्षमाणाः परस्परम् ।
नोचुर्विप्रा महाभागाः कन्यां मत्वा ह्यवेदिकाम् ।
कुत्सयित्वा मुनिं तत्र मनसा मुनिसत्तमाः ।
यथागतं ययुः क्रुद्धा नानादेशनिवासिनः ।
कन्या च संस्थिता तत्र पितृवेश्मनि भामिनी ।
ततः कदाचिद्ब्रह्मण्यो विद्वान्न्यायविशारदः ।
ऊहापोहविधानज्ञो ब्रह्मचर्यसमन्वितः ।
वेदविद्वेदतत्त्वज्ञः क्रियाकल्पविशारदः ।
आत्मतत्त्वविभागज्ञः पितृमान्गुणसागरः ।
श्वेतकेतुरिति ख्यातः श्रुत्वा वृत्तान्तमादरात् ।
कन्यार्थं देवलं चापि शीघ्रं तत्रागतोऽभवत् ।
उद्दालकसुतं दृष्ट्वा श्वेतकेतुं महाव्रतम् ।
यथान्यायं च संपूज्य देवलः प्रत्यभाषत ।
कन्ये एष महाभागे प्राप्तो ऋषिकुमारकः ।
वरयैनं महाप्राज्ञं वेदवेदाङ्गपारगम् ।
तच्छ्रुत्वा कुपिता कन्या ऋषिपुत्रमुदैक्षत ।
तां कन्यामाह विप्रर्षिः सोऽहं भद्रे समागतः ।
अन्धोऽहमत्र तत्त्वं हि तथा मन्ये च सर्वदा ।
विशालनयनं विद्धि तथा मां हीनसंशयम् ।
वृणीष्व मां वरारोहे भजे च त्वामनिन्दिते ।
येनेदं वीक्षते नित्यं शृणोति स्पृशतेऽथ वा ।
घ्रायते वक्ति सततं येनेदं रसयते पुनः ।
येनेदं मन्यते तत्त्वं येन बुध्यति वा पुनः ।
न चक्षुर्विद्यते ह्येतत्स वै भूतान्ध उच्यते ।
यस्मिन्प्रवर्तते चेदं पश्यञ्शृण्वन्स्पृशन्नपि ।
जिघ्रंश्च रसयंस्तद्वद्वर्तते येन चक्षुषा ।
तन्मे नास्ति ततो ह्यन्धो वृणु भद्रेऽद्य मामतः ।
लोकदृष्ट्या करोमीह नित्यनैमित्तिकादिकम् ।
आत्मदृष्ट्या च तत्सर्वं विलिप्यामि च नित्यशः ।
स्थितोऽहं निर्भरः शान्तः कार्यकारणभावनः ।
अविद्यया तरन्मृत्युं विद्यया तं तथामृतम् ।
यथाप्राप्तं तु संदृश्य वसामीह विमत्सरः ।
क्रीते व्यवसितं भद्रे भर्ताहं ते वृणीष्व माम् ।

भीष्म उवाच ।

ततः सुवर्चला दृष्ट्वा प्राह तं द्विजसत्तमम् ।
मनसासि वृतो विद्वञ्शेषकर्ता पिता मम ।
वृणीष्व पितरं मह्यमेष वेदविधिक्रमः ।
तद्विज्ञाय पिता तस्या देवलो मुनिसत्तमः ।
श्वेतकेतुं च संपूज्य तथैवोद्दालकेन तम् ।

—(L. 77) Kumbh. ed. आह (for प्राह). —(L. 87) ❀ Cv: अवेदिकाम्, अजानतीम् । ❀ —(L. 103). ❀ Cv: अत्र, संसारे । ❀ —(L. 108) ❀ Cv: येन परमात्मना, वीक्षते जीवः । ❀ —(L. 109) ❀ Cv: चक्षुः, चष्ट इति व्युत्पत्त्या चक्षुःपदवाच्यः परमात्मा, यस्य न विद्यते स भूतान्धः, भूतेष्वन्ध उच्यते । ❀ —(L. 110) ❀ Cv: यस्मिंश्चक्षुषि, परमात्मनि सतीदं जगत्प्रवर्तते, तथैव चक्षुषा, मनसा वर्तते तच्चक्षुर्मे नास्ति । ❀ —(L 114) ❀ Cv: विलिप्यामि, विलिप्ययामि, अन्तर्णीतो णिच् । विर्निषेधे । अलिप्यं, लेपायोग्यं यथा भवति तथा करोमि । ❀ —(L. 116) ❀ Cv: अविद्यया निन्दितया । अविद्यापदेनात्र दुःशास्त्रमुच्यते । दुःशास्त्रनिन्दनजनितभगवत्प्रसादेन मृत्युं तरन्नित्यर्थः (cf. Mait. Up. 7. 9) । ❀

मुनीनामग्रतः कन्यां प्रददौ जलपूर्वकम् ।
उदाहरन्ति वै तत्र श्वेतकेतुं निरीक्ष्य तम् ।
हृत्पुण्डरीकनिलयः सर्वभूतात्मको हरिः ।
श्वेतकेतुस्वरूपेण स्थितोऽसौ मधुसूदनः ।
प्रीयतां माधवो देवः पत्नी चेयं सुता मम ।
प्रतिपादयामि ते कन्यां सहधर्मचरीं शुभाम् ।
इत्युक्त्वा प्रददौ तस्मै देवलो मुनिपुंगवः ।
प्रतिगृह्य च तां कन्यां श्वेतकेतुर्महायशाः ।
उपयम्य यथान्यायमत्र कृत्वा यथाविधि ।
समाप्य तन्त्रं मुनिभिर्वैवाहिकमनुत्तमम् ।
स गार्हस्थ्ये वसन्धीमान्भार्यां तामिदमब्रवीत् ।
यानि चोक्तानि वेदेषु तत्सर्वं कुरु शोभने ।
मया सह यथान्यायं सहधर्मचरी मम ।
अहमित्येव भावेन स्थितोऽहं त्वं तथैव च ।
तस्मात्कर्माणि कुर्वीथाः कुर्यां ते च ततः परम् ।
न ममेति च भावेन ज्ञानाग्निनिलयेन च ।
अनन्तरं तथा कुर्यास्तानि कर्माणि भस्मसात् ।
एवं त्वया च कर्तव्यं सर्वदादुर्भगा मया ।
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
तस्माल्लोकस्य सिद्ध्यर्थं कर्तव्यं चात्मसिद्धये ।
उक्त्वैवं स महाप्राज्ञः सर्वज्ञानैकभाजनः ।
पुत्रानुत्पाद्य तस्यां च यज्ञैः संतर्प्य देवताः ।
आत्मयोगपरो नित्यं निर्द्वंद्वो निष्परिग्रहः ।
भार्यां तां सदृशीं प्राप्य बुद्धिं क्षेत्रज्ञयोरिव ।
लोकमन्यमनुप्राप्तौ भार्या भर्ता तथैव च ।
साक्षिभूतौ जगत्यस्मिंश्चरमाणौ मुदान्वितौ ।
ततः कदाचिद्भर्तारं श्वेतकेतुं सुवर्चला ।
पप्रच्छ को भवानत्र ब्रूहि मे तद्द्विजोत्तम ।
तामाह भगवान्वाग्मी त्वया ज्ञातो न संशयः ।
द्विजोत्तमेति मामुक्त्वा पुनः कमनुपृच्छसि ।
सा तमाह महात्मानं पृच्छामि हृदि शायिनम् ।
तच्छ्रुत्वा प्रत्युवाचैनां स न वक्ष्यति भामिनि ।
नामगोत्रसमायुक्तमात्मानं मन्यसे यदि ।
तन्मिथ्यागोत्रसद्भावे वर्तते देहबन्धनम् ।
अहमित्येष भावोऽत्र त्वयि चापि समाहितः ।
त्वमप्यहमहं सर्वमहमित्येव वर्तते ।
नात्र तत्परमार्थं वै किमर्थमनुपृच्छसि ।
ततः प्रहस्य सा हृष्टा भर्तारं धर्मचारिणी ।
उवाच वचनं काले स्मयमाना तदा नृप ।
किमनेकप्रकारेण विरोधेन प्रयोजनम् ।
क्रियाकलापैर्ब्रह्मर्षे ज्ञाननष्टोऽसि सर्वदा ।
तन्मे ब्रूहि महाप्राज्ञ यथाहं त्वामनुव्रता ।

श्वेतकेतुरुवाच ।

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
वर्तते तेन लोकोऽयं संकीर्णश्च भविष्यति ।
संकीर्णे च तथा धर्मे वर्णाः संकरमेति च ।
संकरे च प्रवृत्ते तु मात्स्यो न्यायः प्रवर्तते ।
तदनिष्टं हरेर्भद्रे धातुरस्य महात्मनः ।
परमेश्वरसंक्रीडा लोकसृष्टिरियं शुभे ।
यावत्पांसव उद्दिष्टास्तावन्तोऽस्य विभूतयः ।
तावन्त्यश्चैव मायास्तु तावत्योऽस्याश्च शक्तयः ।
एवं सुगह्वरे युक्तो यत्र मे तद्भवाभवम् ।
छित्त्वा ज्ञानासिना गच्छेत्स विद्वान्स च मे प्रियः ।
सोऽहमेव न संदेहः प्रतिज्ञा इति तस्य वै ।
ये मूढास्ते दुरात्मानो धर्मसंकरकारकाः ।
मर्यादाभेदका नीचा नरके यान्ति जन्तवः ।
आसुरीं योनिमापन्ना इति देवानुशासनम् ।
भगवत्या तथा लोके रक्षितव्यं न संशयः ।
मर्यादालोकरक्षार्थमेवमस्मि तथा स्थितः ।

सुवर्चलोवाच ।

शब्दः कोऽत्र इति ख्यातस्तथार्थं च महामुने ।
आकृतिं च तयोर्ब्रूहि लक्षणेन पृथक्पृथक् ।

श्वेतकेतुरुवाच ।

व्यत्ययेन च वर्णानां परिवादिकृतो हि यः ।
स शब्द इति विज्ञेयस्तन्निपातोऽर्थ उच्यते ।

सुवर्चलोवाच ।

शब्दार्थयोर्हि संबन्धस्त्वनयोरस्ति वा न वा ।

—(L. 139) ❀ **Cv**: ज्ञानाग्निनिलयेन, लीङ् लेप्ये इति धातोः । ज्ञानाग्निसंबन्धेन । ❀ —(L. 141) ❀ **Cv**: सर्वदादुर्भगा मया, [अ]दुष्टो भगो भाग्यं यस्याश्चेत्त्वमसि सादुर्भगा । मया सह भस्मसात् कुर्या इति पूर्वेणान्वयः । ❀ —(L. 147) ❀ **Cv**: बुद्धिं क्षेत्रज्ञयोरिव, क्षेत्रज्ञयोर्जीवव्यापारयोः सदृशीं बुद्धिमिव, भेदबुद्धिमिवेत्यर्थः । ❀ —(L. 157) ❀ **Cv**: मिथ्यागोत्रसद्भावे, गोत्रादिकं मिथ्या अनित्यं व्यर्थं वा । ❀ —(L. 174) ❀ **Cv**: सुगह्वरे, संसारे । ❀ —(L. 176) ❀ **Cv**: सोऽहमेव, सः उत्तानन्तैश्वर्यसंपन्नः, अहमेव नान्य इति तस्य परमात्मनः प्रतिज्ञा । यद्वा । तत्त्वंपदयोः स तदितिपदवाच्यः अहमेव । जीवस्तु अतत्पदवाच्य एव, न तु मदभेदेन तत्पदवाच्यः । ❀ —(L. 184) Kumbh. ed. परिवादकृतो; **Cv** (gloss: परितः परमार्थरूप-

तन्मे ब्रूहि यथातत्त्वं शब्दस्थानेऽर्थ एव चेत् ।

श्वेतकेतुरुवाच ।

शब्दार्थयोर्न चैवास्ति संबन्धोऽत्यन्त एव हि ।
पुष्करे च यथा तोयं तथास्तीति च वेन्थ तत् ।

सुवर्चलोवाच ।

अर्थे स्थितिर्हि शब्दस्य नान्यथा च स्थितिर्भवेत् ।
विद्यते चेन्महाप्राज्ञ विनार्थं ब्रूहि सत्तम ।

श्वेतकेतुरुवाच ।

ससंसर्गोऽतिमात्रस्तु वाचकत्वेन वर्तते ।
अस्ति चेद्वर्तते नित्यं विकारोच्चारणेन वै ।

सुवर्चलोवाच ।

शब्दस्थानोऽत्र इत्युक्तस्तथार्थ इति मे कृतम् ।
अर्थास्थितो न तिष्ठेच्च विरूढमिह भाषितम् ।

श्वेतकेतुरुवाच ।

न विकूलोऽत्र कथितो नाकाशं हि विना जगत् ।
संबन्धस्तत्र नास्त्येव तद्वदित्येष मन्यताम् ।

सुवर्चलोवाच ।

सदाहंकारशब्दोऽयं व्यक्तमात्मनि संश्रितः ।
न वाचस्तत्र वर्तन्ते इति मिथ्या भविष्यति ।

श्वेतकेतुरुवाच ।

अहंशब्दो ह्यहंभावे नात्मभावे शुभव्रते ।
न वर्तते परेऽचिन्त्ये वाचः सगुणलक्षणाः ।

सुवर्चलोवाच ।

अहं गात्रैकतः श्यामा भवानपि तथैव च ।
तन्मे ब्रूहि यथान्यायमेवं चेन्मुनिसत्तम ।

श्वेतकेतुरुवाच ।

मृण्मये हि घटे भावस्तादृग्भाव इहेष्यते ।
अयं भावः परेऽचिन्त्ये ह्यात्मभावो यथा च मृत् ।
अहं त्वमेतदित्येव परे संकल्पनाम तत् ।
तस्माद्वाचो न वर्तन्ते इति नैव विरुध्यते ।
तस्माद्वामेन वर्तन्ते मनसा भीरु सर्वशः ।
यथाकाशगतं विश्वं संसक्तमिव लक्ष्यते ।
संसर्गे सति संबन्धात्तद्विकारं भविष्यति ।
अनाकाशगतं सर्वं विकारे च सदा गतम् ।
तद्ब्रह्म परमं शुद्धमनौपम्यं न शक्यते ।
न दृश्यते तथा तच्च दृश्यते च मतिर्मम ।

सुवर्चलोवाच ।

निर्विकारं ह्यमूर्तिं च निरयं सर्वगं तथा ।
दृश्यते च वियन्नित्यं दृगात्मा तेन दृश्यते ।

श्वेतकेतुरुवाच ।

त्वचा स्पृशति वै वायुमाकाशस्थं पुनः पुनः ।
तत्स्थं गन्धं तथाघ्राति ज्योतिः पश्यति चक्षुषा ।
तमोरश्मिगुणश्चैव मेघजालं तथैव च ।
वर्षं तारागणं चैव नाकाशं दृश्यते पुनः ।
आकाशस्याप्यथाकाशं सद्रूपमिति निश्चितम् ।
तदर्थे कल्पिता ह्येते तत्सत्यो विष्णुरेव च ।
यानि नामानि गौणानि ह्युपचारात्परात्मनि ।
न चक्षुषा न मनसा न चान्येन परो विभुः ।
चिन्त्यते सूक्ष्मया बुद्ध्या वाचा वक्तुं न शक्यते ।
एतत्प्रपन्नमखिलं तस्मिन्सर्वं प्रतिष्ठितम् ।
महाघटोऽल्पकश्चैव यथा मह्यां प्रतिष्ठितौ ।
न च स्त्री न पुमांश्चैव यथैव न नपुंसकः ।
केवलज्ञानमात्रं तत्तस्मिन्सर्वं प्रतिष्ठितम् ।

---

मेव वदतीति परिवादी । तेन कारणेन कृतः, ब्रह्ममीमांसायां साधितः ) परिवादि° ( as above ). —( L. 188 ) ❀ Cv : शब्दार्थयोः, वेदरूपशब्दस्य अर्थरूपब्रह्मणश्च, अत्यन्तसंबन्धः, प्रतिपाद्यप्रतिपादकरूपसंबन्धः । ❀ —( L. 193 ) ❀ Cv : विकारोच्चारणेन, विविधाकारोच्चारणेन । ❀ —( L 194 ) ❀ Cv : अत्रः, वेदादिरक्षकनिरपेक्षः अर्थः, परब्रह्मरूपार्थः शब्दस्थानः, शब्दस्य वेदस्याधारभूतः । ❀ Kumbh. ed. कृतः ; Cv ( gloss : अङ्गीकृतम् ) कृतम् ( as above ). —( L. 195 ) Kumbh. ed. अर्थः स्थितो ; Cv ( gloss : अर्थेन आस्थितः ) अर्थास्थितो ( as above ). ❀ Cv : विरूढं, निश्चितम् । ❀ —( L. 196 ) ❀ Cv : विकूलः, दृष्टान्तानुकूलः परिहारो न कथितः । ❀ —( L. 200 ) Kumbh. ed. ह्यहंभावो ; Cv ( gloss : अहमिति भावनामात्रे ) ह्यहंभावे ( as above ). ❀ Cv : आत्मभावे, अनन्तकल्याणगुणसमुदाये । ❀ —( L. 201 ) Kumbh. ed. न वर्तते ; Cv ( gloss : सामस्त्येन भगवत्प्रतिपादको न भवति ) न वर्तते ( as above ). ❀ Cv : वाचः सगुणलक्षणाः, यः शब्दः यद्गुणवाचकत्वयोग्यः स तमेव गुणं वक्ति । ❀ —( L. 202 ) ❀ Cv : गात्रैकतः एकस्मिन्गात्रे, न जन्मान्तरे । ❀ —( L. 205 ) Kumbh. ed. तत् ( for मृत् ). —( L. 206 ) Kumbh. ed. संकल्पनामया ; Cv ( gloss : ईषद्दोषद्गुणप्रतिपादकं नाम ) संकल्पनाम तत् ( as above ). —( L 214–15 ) ❀ Cv : निरयं, निर्गतं अयं, अयनं नाशो यस्य तत्तथोक्तम् । दृगात्मा, ज्ञानस्वरूपी । ❀ —( L. 225 ) Kumbh. ed. प्रपंचम् ; Cv ( gloss : शरणागतम् ) प्रपन्नम् ( as above ). —( L 230 ) ❀ Cv : आत्मनः प्रकृत्यां, परमात्माधीनस्वप्रकृ-

भूमिसंस्थानयोगेन वस्तुसंस्थानयोगतः ।
रसभेदा यथा तोये प्रकृत्यामात्मनस्तथा ।
तद्वाक्यस्मरणाच्चित्यं तृप्तिं वारि पिबन्निव ।
प्राप्नोति ज्ञानमखिलं तेन तत्सुखमेधते ।

सुवर्चलोवाच ।

अनेन साध्यं किं स्याद्वै शब्देनेति मतिर्मम ।
वेदगम्यः परोऽचिन्त्य इति पौराणिका विदुः ।
निरर्थको यथा लोके तद्वत्स्यादिति मे मतिः ।
निरीक्ष्यैवं यथान्यायं वक्तुमर्हसि मेऽनघ ।

श्वेतकेतुरुवाच ।

वेदगम्यं परं शुद्धमिति सत्या परा श्रुतिः ।
व्यावृत्त्या नैतदित्याह उपलिङ्गे च वर्तते ।
निरर्थको न चैवास्ति शब्दो लौकिक उत्तमे ।
अनन्वयाः स्मृताः शब्दा निरर्था इति लौकिकैः ।
गृह्यन्ते तद्वदित्येव न वर्तन्ते परात्मनि ।
अगोचरत्वं वचसां युक्तमेवं तथा शुभे ।
साधनस्योपदेशाच्च ह्युपायस्य च सूचनात् ।
उपलक्षणयोगेन व्यावृत्त्या च प्रदर्शनात् ।
वेदगम्यः परः शुद्ध इति मे धीयते मतिः ।
अध्यात्मध्यानसंभूतमभूतं भूतवत्स्फुटम् ।
ज्ञानं विद्धि शुभाचारे तेन यान्ति परां गतिम् ।
यदि मे व्याहृतं गुह्यं श्रुतं न तु त्वया शुभे ।
तथ्यमित्येव वा शुद्धे ज्ञानं ज्ञानविलोचने ।
नानारूपवदस्यैवमैश्वर्यं दृश्यते शुभे ।
न वायुस्तत्र सूर्यस्तत्राग्निस्तत्तु परं पदम् ।
अनेन पूर्णमेतद्धि हृदि भूतमिहेष्यते ।
एतावदात्मविज्ञानमेतावद्यदहं स्मृतम् ।
आवयोर्न च सत्त्वे वै तस्मादज्ञानबन्धनम् ।

भीष्म उवाच ।

एवं सुवर्चला हृष्टा प्रोक्ता भर्त्रा यथार्थवत् ।
परिचर्यमाणा ह्यनिशं तत्त्वबुद्धिसमन्विता ।
भर्ता च तामनुप्रेक्ष्य नित्यनैमित्तिकान्वितः ।
परमात्मनि गोविन्दे वासुदेवे महात्मनि ।
समाधाय च कर्माणि तन्मयत्वेन भावितः ।
कालेन महता राजन्प्राप्नोति परमां गतिम् ।
एतत्ते कथितं राजन्यस्मात्त्वं परिपृच्छसि ।
गार्हस्थ्यं च समास्थाय गतौ जायापती परम् ।

Colophon

## 20

After 12. 214, Kumbh. ed. **C**v. ins :

युधिष्ठिर उवाच ।

केचिदाहुर्द्विधा लोके त्रिधा राजन्ननेकधा ।
न प्रत्ययो न चान्यच्च दृश्यते ब्रह्म नैव तत् ।
नानाविधानि शास्त्राणि युक्ताश्चैव पृथग्विधाः ।
किमधिष्ठाय तिष्ठामि तन्मे ब्रूहि पितामह ।

भीष्म उवाच ।

स्वे स्वे युक्ता महात्मानः शास्त्रेषु प्रभविष्णवः ।
वर्तन्ते पण्डिता लोके को विद्वान्कश्च पण्डितः ।
सर्वेषां तत्त्वमज्ञाय यथारुचि तथा भवेत् ।
अस्मिन्नर्थे पुराभूतमितिहासं पुरातनम् ।
महाविवादसंयुक्तमृषीणां भावितात्मनाम् ।
हिमवत्पार्श्व आसीना ऋषयः संशितव्रताः ।
षण्णां तानि सहस्राणि ऋषीणां गणमाहितम् ।
तत्र केचिद्ध्रुवं विश्वं सेश्वरं तु निरीश्वरम् ।
प्राकृतं कारणं नास्ति सर्वं नैवमिदं जगत् ।
अनेन चापरे विप्राः स्वभावं कर्म चापरे ।
पौरुषं कर्म दैवं च यत्स्वभावादिरेव तम् ।
नानाहेतुशतैर्युक्ता नानाशास्त्रप्रवर्तकाः ।
स्वभावाद्ब्राह्मणा राजञ्जिगीषन्तः परस्परम् ।
ततस्तु मूलमुद्भूतं वादिप्रत्यर्थिसंयुतम् ।
पात्रदण्डविघातं च वल्कलाजिनवाससाम् ।

---

त्याम् । ❀ —(L. 238) Kumbh. ed. व्याहत्या; Cv (gloss: अप्राप्य निवृत्त्या) व्यावृत्त्या (as above). Kumbh. ed व्युपलिंगे; Cv (gloss: उपपन्नगुणे) उपलिङ्गे (as above). —(L. 240) Kumbh. ed. तथा (for स्मृताः). —(L. 241) ❀ Cv: तद्वदित्येव, एकैकगुणलाभायेति यावत् । ❀ —(L. 244) ❀ Cv: व्यावृत्त्या नेति नेति श्रुतौ । ❀ —(L. 246) ❀ Cv: भूतवत्, ब्रह्मादिषु यद्भूतमपरोक्षज्ञानं तद्वत् । ❀ —(L. 251) Kumbh. ed. तत्तत् (for तत्तु).

—Colophon. *Adhy. name :* सुवर्चलाश्वेतकेतूपाख्यानं. With the above cf. App. no. 20 below.

20

(L. 1) ❀ Cv: द्विधा, जीवजडात्मकतया । त्रिधा जीवे, देवासुरमनुष्यत्वेन । जडे, तेजोबन्नात्मकत्वेन । अनेकधा, पञ्चभूतात्मकतया । ❀ —(L. 2) ❀ Cv: न चान्यच्च, सर्वथा अविश्वासोऽपि न दृश्यते । ❀ —(L. 13) ❀ Cv: प्राकृतं, प्रकृतिसंबन्धि । ❀ —(L. 15) ❀ Cv: पौरुषं, पुरुषप्रयत्नः । ❀

एके मन्युसमापन्नास्ततः शान्ता द्विजोत्तमाः ।
वसिष्ठमब्रुवन्सर्वे त्वं नो ब्रूहि सनातनम् ।
नाहं जानामि विप्रेन्द्राः प्रत्युवाच स तान्प्रभुः ।
ते सर्वे सहिता विप्रा नारदमृषिमब्रुवन् ।
त्वं नो ब्रूहि महाभाग तत्त्वविच्च भवानसि ।
नाहं द्विजा विजानामि क्व हि गच्छाम संगताः ।
इति तानाह भगवांस्ततः प्राह च स द्विजान् ।
को विद्वानिह लोकेऽस्मिन्नमोहोऽमृतमद्भुतम् ।
तच्च ते शुश्रुवुर्वाक्यं ब्राह्मणा ह्यशरीरिणः ।
सनद्धाम द्विजा गत्वा पृच्छध्वं स च वक्ष्यति ।
तमाह कश्चिद्द्विजवर्यसत्तमो
विभाण्डको मण्डितवेदराशिः ।
कस्त्वं भवानर्थविभेदमध्ये
न दृश्यसे वाक्यमुदीरयंश्च ।
अथाहेदं तं भगवान्सनन्तं
महामुने विद्धि मां पण्डितोऽसि ।
ऋषिं पुराणं सततैकरूपं
यमक्षयं वेदविदो वदन्ति ।
पुनस्तमाहेदमसौ महात्मा
स्वरूपसंस्थं वद आह पार्थ ।
त्वमेकोऽस्मदृषिपुंगवाद्य
न सत्स्वरूपमथ वा पुनः किम् ।
अथाह गम्भीरतरानुवादं
वाक्यं महात्मा ह्यशरीर आदिः ।
न ते मुने श्रोत्रमुखेऽपि चास्यं
न पादहस्तौ प्रपदात्मके न ।
ब्रुवन्मुनीन्सत्यमथो निरीक्ष्य
स्वमाह विद्वान्मनसा निगम्य ।
ऋषे कथं वाक्यमिदं ब्रवीषि
न चास्य मन्ता न च विद्यते चेत् ।
न शुश्रुवुस्ततस्तत्तु प्रतिवाक्यं द्विजोत्तमाः
निरीक्षमाणा आकाशं प्रहसन्तस्ततस्ततः ।
आश्चर्यमिति मत्वा ते ययुर्हैमं महागिरिम् ।
सनत्कुमारसंकाशं सगणा मुनिसत्तमाः ।
तं पर्वतं समारुह्य ददृशुर्ध्यानमाश्रिताः ।
कुमारं देवमर्हन्तं वेदपाराविवर्जितम् ।
ततः संवत्सरे पूर्णे प्रकृतिस्थं महामुनिम् ।
सनत्कुमारं राजेन्द्र प्रणिपत्य द्विजाः स्थिताः ।
आगतान्भगवानाह ज्ञाननिर्धूतकल्मषः ।
ज्ञातं मया मुनिगणा वाक्यं तदशरीरिणः ।
कार्यमद्य यथाकामं पृच्छध्वं मुनिपुंगवाः ।
तमब्रुवन्प्राञ्जलयो महामुनिं
द्विजोत्तमं ज्ञाननिधिं सुनिर्मलम् ।
कथं वयं ज्ञाननिधिं वरेण्यं
यक्ष्यामहे विश्वरूपं कुमार ।
प्रसीद नो भगवञ्ज्ञानलेशं
मधुप्रयाताय सुखाय सन्तः ।
यत्तत्पदं विश्वरूपं महामुने
तत्र ब्रूहि किं कुत्र महानुभाव ।
स तैर्वियुक्तो भगवान्महात्मा
यः संगवान्सत्यवित्तच्छृणुध्व ।
अनेकसाहस्रकलेषु चैव
प्रसन्नधातुं च शुभाज्ञया सत् ।
यथाह पूर्वं युष्मासु ह्यशरीरी द्विजोत्तमाः ।
तथैव वाक्यं तत्सत्यमजानन्तश्च कीर्तितम् ।

शृणुध्वं परमं कारणमस्ति । कथमवगम्यते । अहन्यहनि पाकविशेषो दृश्यते । तेन मिश्रं सर्वं मिश्रयते । यथा मण्डली दृशि सर्वेषामस्ति निदर्शनम् । अस्ति चक्षुष्मतामस्ति ज्ञाने स्वरूपं पश्यति । यथा दर्पणान्तर्निदर्शनम् । स एव सर्वं विद्वांश्च बिभेति न गच्छति । कुत्राहं कस्य नाहं केन केनेत्यवर्तमानो विजानाति । स युगतो व्यापी । स पृथक्स्थितः । तदपरमार्थम् । यथा वायुरेकः सन्बहुधेरितः । आश्रयविशेषो वा यस्याश्रयो वा । यथावद्द्विजे मृगे व्याघ्रे च । मनुजे वेणुसंश्रयो भिद्यते वायुरथैकः । आत्मा तथासौ परमात्मासावन्य

— ( L. 28 ) ❀ Cv : अशरीरिणः कस्यचित् । ❀ — ( L. 29 ) ❀ Cv : सनद्धाम, सनत्कुमारस्य धाम । ❀ — ( L. 32 ) ❀ Cv : अर्थविभेदमध्ये, शास्त्रार्थस्य निमित्तेन भेदः कलहः तस्य मध्ये । ❀ — ( L. 55 ) ❀ Cv : पारा, परायणं । ❀ — ( L. 68 ) Kumbh. ed. तत्र ( for कुत्र ). — ( L. 76 ) ❀ Cv : पाकविशेषः, धनधान्यफलादौ देहे च । ❀ — ( L. 77 ) ❀ Cv : मण्डली, समूहः, दृशि दर्शनविषये । ❀ — ( L. 78 ) ❀ Cv : ज्ञाने ज्ञानविषयतया, यत्स्वरूपं, स्वतन्त्रपरमात्मनः स्वरूपमस्ति । दर्पणान्तः अविवेकी प्रतिमुखमेव पश्यति, विवेकी तु प्रतिमुखनियामकं बिम्बभूतं मुखं पश्यति । ❀ — ( L. 79 ) ❀ Cv : केन, केन वा साधनेन, जगत्करोमि । ❀ — ( L. 80 ) ❀ Cv : युगतो युगे युगे । पृथक्, जीवजडात्मकात्प्रपञ्चादत्यन्तभिन्नतया स्थितः । ❀ — ( L. 81 ) Kumbh. ed. अपरमार्थः; Cv ( gloss : तदपरम्, तस्मान्नारायणादपरं जगत् । आर्थं, स्वस्वपुरुषार्थवशाज्जातं, न तु तद्वत्पूर्णम् ) अपरमार्थम् ( as above ). — ( L. 82 ) Kumbh. ed. यस्याश्रयं; Cv ( gloss : आश्रय

इव भाति। एवमात्मा स एव गच्छति। सर्वमात्मा पश्यञ्शृणोति न जिघ्रति न भाषते।

चक्रेऽस्य तं महात्मानं परितो दश रश्मयः।
विनिष्क्रम्य यथा सूर्यमनुगच्छति तं प्रभुम्।
दिने दिनेऽस्तमभ्येति पुनरुद्गच्छते दिशः।
तावुभौ न रवौ चास्तां तथा वित्त शरीरिणम्।
पतिते वित्त विप्रेन्द्राः भक्षणे चरणे परः।
ऊर्ध्वमेकस्तथाऽधस्तादेकस्तिष्ठति चापरः।
हिरण्यसदनं श्रेयं समेत्य परमं पदम्।
आत्मना ह्यात्मदीपं तमात्मनि ह्यात्मपूरुषम्।
संचितं संचितं पूर्वं भ्रमरो वर्तते भ्रमन्।
योऽभिमानीव जानाति न मुह्यति न हीयते।

न चक्षुषा पश्यति कश्चनैनं
हृदा मनीषा पश्यति रूपमस्य।
न शुक्लं न कृष्णं परमार्थभावं
गुहाशयं ज्ञानदेवीकरस्थम्।

ब्राह्मणस्य न सादृश्ये वर्तते सोऽपि किं पुनः।
इज्यते यस्तु मन्त्रेण यजमानो द्विजोत्तमः।
नैव धर्मी न चाधर्मी द्वंद्वातीतो विमत्सरः।
ज्ञानतृप्तः सुखं शेते ह्यमृतात्मा न संशयः।
एवमेष जगत्सृष्टिं कुरुते मायया प्रभुः।
न जानाति विरूढात्मा कारणं चात्मनो ह्यसौ।
ध्याता द्रष्टा तथा मन्ता बोद्धा दृष्टान्स एव सः।
को विद्वान्परमात्मानमनन्तं लोकभावनम्।
यत्तु शक्यं मया प्रोक्तं गच्छध्वं मुनिपुंगवाः।

भीष्म उवाच।

एवं प्रणम्य विप्रेन्द्रा ज्ञानसागरसंभवम्।
सनत्कुमारं संदृष्ट्वा जग्मुस्ते रुचिरं पुनः।
तस्मात्त्वमपि कौन्तेय ज्ञानयोगपरो भव।
ज्ञानमेव महाराज सर्वदुःखविनाशनम्।

इदं महादुःखसमाकराणां
नृणां परित्राणविनिर्मितं पुरा।
पुराणपुंसा ऋषिणा महात्मना
महामुनीनां प्रवरेण तद्भवम्।

Colophon.

युधिष्ठिर उवाच।

यदिदं तप इत्याहुः किं तपः संप्रकीर्तितम्।
उपवासमथान्यत्तु वेदाचारमथो नु किम्।
शास्त्रं तपो महाप्राज्ञ तन्मे ब्रूहि पितामह।

भीष्म उवाच।

पक्षमासोपवासादीन्मन्यन्ते वै तपोधनाः।
वेदव्रतादीनि तपः अपरे वेदपारगाः।
वेदपारायणं चान्ये चाहुस्तत्त्वमथापरे।
यथाविहितमाचारस्तपः सर्वं व्रतं गताः।
आत्मविद्याविधानं यत्तत्तपः परिकीर्तितम्।
त्यागस्तपस्तथा शान्तिस्तप इन्द्रियनिग्रहः।
ब्रह्मचर्यं तपः प्रोक्तमाहुरेवं द्विजातयः।
सदोपवासो यो विद्वान्ब्रह्मचारी सदा भवेत्।
यो मुनिश्च सदा धीमान्विघसाशी विमत्सरः।
ततस्त्वनन्तमप्याहुर्यो नित्यमतिथिप्रियः।
नान्तराशीस्ततो नित्यमुपवासी महाव्रतः।
ऋतुगामी तथा प्रोक्तो विघसाशी स्मृतो बुधैः।
भृत्यशेषं तु यो भुङ्क्ते यज्ञशेषं तथामृतम्।
एवं नानार्थसंयोगं तपः शश्वदुदाहृतम्।
केषां लोका ह्यपर्यन्ताः सर्वे सत्यव्रते स्थिताः।
येऽपि कर्ममयं प्राहुस्ते द्विजा ब्राह्मणाः स्मृताः।
रमन्ते दिव्यभोगैश्च पूजिता ह्यप्सरोगणैः।
ज्ञानात्मकं तपःशब्दं ये वदन्ति विनिश्चिताः।
ते ह्यन्तरात्मसद्भावं प्रपन्ना नृपसत्तम।
एतत्ते नृपशार्दूल प्रोक्तं यत्पृष्टवानसि।
यथावस्तूनि संज्ञानि विविधानि भवन्त्युत।

युधिष्ठिर उवाच।

पितामह महाप्राज्ञ राजाधीना नृपाः पुनः।

---

इव। वा विकल्पोपमानयोरित्यमरः [ 3. 249 ]) यस्याश्रयो वा (as above). —(L 85) Kumbh. ed. च घ्राति (for जिघ्रति). —(L. 89) ❀ Cv: ता उभौ, उदयास्तमयौ, रवौ न चास्तां, मनुष्यदृष्ट्यैव उदयास्तमयौ। सूर्यस्त्वेकप्रकार एव। शरीरिणं, शरीरान्तर्गतं नारायणं वित्त। ❀ —(L. 90) ❀ Cv: पतनभक्षणसंचरणोर्ध्वगमनाधोगमनावस्थानाख्यषड्विधजीवव्यापारेषु षड्भिर्मूर्तिभिर्हि भगवान्प्रेरयतीति भावः। ❀ —(L. 92) ❀ Cv: हिरण्यसदनं, 'हिरुक्सुखं समुद्दिष्टम्' इति वचनाद्धिरण्यस्य, सुखस्य, मुकुटाद्यलंकारसुवर्णस्य वा सदनम्। ❀ —(L. 105) Kumbh. ed. विमूढात्मा; Cv (gloss: विशेषेण प्रादुर्भूतस्वरूपः) विरू° (as above). Colophon. — *Adhy. name:* मुनिसनत्कुमारसंवादः. —(L. 120) ± 12. 214. $4^{ab}$. — With lines 123–129, cf. 12. 214. 4–7. —(L 138) ❀ Cv: अन्तरात्मसद्भावम्, अन्तरात्मनः, अन्तर्नियामकपरमात्मनः सद्भावं विद्यमानत्वं, सद्भक्तिं वा। ❀ —(L. 146) Kumbh.

अन्यानि च सहस्राणि नामानि विविधानि च ।
प्रतियोगीनि वै तेषां छन्नान्यस्तमितानि च ।
इदं सर्वं प्राकृतकमिदं सर्वत्र पश्य वै ।
तस्माद्यथागतं राजन्यथारुचि नृणां भवेत् ।

भीष्म उवाच ।

अस्मिन्नर्थे पुरावृत्तं शृणु राजन्युधिष्ठिर ।
ब्राह्मणानां समूहे तु यदुवाच सुवर्चला ।
देवलस्य सुता विद्वन्सर्वलक्षणशोभिता ।
कन्या सुवर्चला नाम योगभावितचेतना ।
हेतुना केन जाता सा निर्द्वंद्वा नष्टसंशया ।
साब्रवीत्पितरं विप्रं वरान्वेषणतत्परा ।
अन्धाय मां महाप्राज्ञ देहि वीक्ष्य सुलोचनम् ।
एवं स च पितः शश्वन्मयेदं [ प्रार्थितं ] मुने ।

पितोवाच ।

न शक्यं प्रार्थितुं वत्से त्वयाद्य प्रतिभाति मे ।
अन्धतानन्धता चेति विचारो मम जायते ।
उन्मत्तेव सुते वाक्यं भाषसे पृथुलोचने ।

कन्योवाच ।

नाहमुन्मत्तभूताद्य बुद्धिपूर्वं ब्रवीमि ते ।
विद्धि वै तादृशं लोके स मां भजति वेदवित् ।
यान्यांस्त्वं मन्यसे दातुं मां द्विजोत्तम तानिह ।
आनयान्यान्महाभाग ह्यहं द्रक्ष्यामि तेषु तम् ।
तथेति चोक्त्वा तां विप्रः प्रेक्षयामास शिष्यकान् ।
ऋषेः प्रभावं दृष्ट्वा ते कन्यायाश्च द्विजोत्तमाः ।
अनेकमुनयो राजन्संप्राप्ता देवलाश्रमम् ।
तानागतानथाभ्यर्च्य कन्यामाह पिता महान् ।
यदीच्छसि वरं भद्रे तं विप्रं वरय स्वयम् ।
तथेति चोक्त्वा कल्याणी तप्तहेमनिभानना ।
करसंमितमध्याङ्गी वाक्यमाह तपोधनाः ।
यद्यस्ति संमतो विप्रो ह्यन्धोऽनन्धः स मे वरः ।
नोचुर्विप्रा महाभागां प्रतिवाक्यं ययुश्च ते ।
कन्या च तिष्ठतामत्र पितुर्वेश्मनि भारत ।
श्वेतकेतुः कहालस्य श्यालः परमधर्मवित् ।
श्रुत्वा ब्रह्मा तदागम्य कन्यामाह महीपते ।
सोऽहं भद्रे समावृत्तस्त्वयोक्तो यः पुरा द्विजः ।
विशालनयनं विद्धि मामन्धोऽहं वृणीष्व माम् ।

सुवर्चलोवाच ।

कथं विशालनेत्रोऽसि कथं वा त्वमलोचनः ।
ब्रूहि पश्चादहं विद्वन्परीक्षे त्वां द्विजोत्तम ।

द्विज उवाच ।

प्रतियोगीनि नामानि छन्नान्यस्तमितानि च ।
शब्दे स्पर्शे तथा रूपे रसे गन्धे सहेतुकम् ।
न मे प्रवर्तते चेतो न प्रत्यक्षं हि तेषु मे ।
अलोचनोऽहं तस्माद्धि न गतिर्विद्यते यतः ।
येन पश्यति सुश्रोणि भाषते स्पृशते पुनः ।
भुज्यते घ्रायते नित्यं शृणोति मनुते तथा ।
तच्चक्षुर्विद्यते मह्यं येन पश्यति वै स्फुटम् ।
सुलोचनोऽहं भद्रे वै पृच्छ वा किं वदामि ते ।
सर्वमस्मिन्न मेऽविद्या विद्वान्हि परमार्थतः ।
सा विशुद्धा ततो भूत्वा श्वेतकेतुं महामुनिम् ।
प्रणम्य पूजयामास तां भार्यां स च लब्धवान् ।
वैराग्यसंयुता कन्या तादृशं पतिमुत्तमम् ।
प्राप्ता राजन्महाप्राज्ञ तस्मादर्थः पृथक्पृथक् ।
एतत्ते कथितं राजन्किं भूयः श्रोतुमिच्छसि ।

Colophon.

## 21

After 12. 215. 35, Kumbh. ed Cv. ins.:

नैवान्तरं विजानाति श्रुत्वा गुरुमुखात्ततः ।
वाक्यं वाक्यार्थविज्ञानमालोक्य मनसा यतिः ।
विवेकप्रत्ययापन्नमात्मानमनुपश्यति ।
विरज्यति ततो भीत्या परमेश्वरमृच्छति ।
त्रातारं सर्वदुःखानां तत्सुखान्वेषणं यथा ।
करोति सद्भिः संसर्गमलं सन्तः सुखाय वै ।
सतां सकाशादाज्ञाय मार्गं लक्षणवत्तया ।
सर्वसङ्गविनिर्मुक्तः परमात्मानमृच्छति ।
विषयेच्छाकृतो धर्म[ र्मैः ] सरजस्को भयावहः ।
धर्महानिमवाप्नोति क्रमात्तेन नरः पुनः ।
भक्तिहीनो भवत्येव परमात्मनि चाच्युत ।
वाचके वापि च स्थानं न हन्त्येव विमोचितः ।
साक्ष्यैं( sic ) चास्य रतिर्नित्यं संसारे च रतिर्भवेत् ।

---

ed. om. the ref. — Kumbh. ed. om. line 177. — (L. 177) ❀ Cv: छन्नानि, निगूढार्थानि, गुह्यभाषाप्रोक्तानि। अस्तमितानि, बाल्युवस्थविरादिनामानि, उत्तरोत्तरदशायां पूर्वपूर्व· नाम्नः ह्यस्तमितत्वात् । — (L. 185) ❀ Cv: अस्मिन्पर· मात्मनि सर्वं जगदस्ति । मे अविद्या, अहंममतारूपा, नास्ति। ❀ — Colophon. *Adhy. name:* सुवर्चलाख्यान; cf. Appendix I, No. 19, lines 43-260.

तस्य नित्यमविज्ञानादात्मा चैव न सिध्यति ।
उन्मत्तवृत्तिर्भवति क्रमादेवं प्रवर्तते ।
आशौचं वर्धते नित्यं न शाम्यति कथंचन ।
विषये चान्वितस्यास्य मोक्षवाञ्छा न जायते ।
हेत्वाभासेषु संलीनः स्तौति वैषयिकान्गुणान् ।
न शास्त्राणि शृणोत्येव मानदर्पसमन्वितः ।
स्वतःसिद्धं न भोगस्तं स्वतःसिद्धं न वेत्ति च ।
चिद्रूपधारणं चैव परं वस्तु अथाव्ययम् ।
नानायोनिगतस्तेन भ्राम्यमाणः स्वकर्मभिः ।
तीर्णपारं न जानाति महामोहसमन्वितः ।
आचार्यसंश्रयाद्विद्याद्विनयं समुपागतः ।
अनुकूलेषु धर्मेषु चिनोत्येनं ततस्ततः ।
आचार्य इति च ख्यातस्तेनासौ बलवृत्रहन् ।
नियतेनैव सद्भावस्तेन जन्मान्तरादिषु ।
कर्मसंचयतूलौघः क्षिप्यते ज्ञानवायुना ।
एवं युक्तसमाचारः संसारविनिवर्तकः ।
अनुकूलवृत्तिं सततं छिनत्त्येव भृगुर्यथा ।
येन चायं समापन्नो वैतृष्ण्यं नाधिगच्छति ।
अभ्यन्तरः स्मृतः शक्र तत्साम्यं परिवर्जयेत् ।
प्रथमं तत्कृतेनैव कर्मणा परिसृ[ग]च्छति ।
द्वितीयं स्वप्नयोगं च कर्मणा परिगच्छति ।
एतैरक्षैः समापन्नः प्रत्यक्षोऽसौ समास्थितः ।
सुषुप्त्याख्यस्तुरीयोऽसौ न च ह्यावरणान्वितः ।
लोकवृत्त्या तमीशानं यजञ्छुद्धन्यमी भवेत् ।
आत्मन्यायासयोगेन निष्क्रियः स परात्परम् ।
आयामे तां विजानाति मायैषा परमात्मनः ।
प्रातिभासिकसामान्याद्बुद्धेर्या संविदात्मिका ।
स्फुलिङ्गसत्त्वसदृशादग्निभावो यथा भवेत् ।
शिशूनामेवमज्ञानामात्मभावोऽन्यथा स्मृतः ।
साध्येऽप्यवस्तुभूताख्ये मित्रामित्रादयः कुतः ।
तदभावे तु शोकाद्या न वर्तन्ते सुरेश्वर ।
एवं बुध्यस्व भगवन्समबुद्धिं समन्वियात् ।
उपायमेतदाख्यातं मा वक्रं गच्छ देवप ।
ज्ञानेन पश्यते कर्म ज्ञानिनां न प्रवर्तकम् ।
यावदारब्धमस्येह तावन्नैवोपशाम्यति ।
तदन्ते तं प्रयात्येव न विद्वानिति मे मतिः ।
यदस्य वाचकं वक्ष्ये तस्मादेतद्भवेत्सदा ।
तेन तेन च भावेन अपायं तत्र पश्यति ।
स्थानभेदेषु वागेषा तालुसंस्था यथा तथा ।
तद्वद्बुद्धिगता ह्यर्था बुद्धिमात्मगतं सदा ।
समस्तसंकल्पविशेषमुक्तं
परं पराणां परमं महात्मा ।
त्रय्यन्तविद्भिः परिगीयतेऽसौ
विष्णुर्विभुर्वास्ति गुणो न नित्यम् ।
वर्णेषु लोकेषु विशेषणेषु
स वासुदेवो वसनान्महात्मा ।
गुणानुरूपं स च कर्मरूपं
ददाति सर्वस्य समस्तरूपम् ।
न संदृशे तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम् ।
भक्त्या च धृत्या स समाहितात्मा
ज्ञानस्वरूपं परिपश्यतीह ।
वदन्ति तन्मे भगवान्ददौ स
स एव शेषं भगवान्महात्मा ।
एवं ममोपायमवेहि शक्र
तस्माल्लोको नास्ति मह्यं सदैव ।

## 22

After 12. 221. 57, Kumbh. ed. **Cv** ins.:

बालानां प्रेक्षमाणानां भक्तान्यश्नन्ति मोहिताः ।
एको दासो भवेत्तेषां तेषां दासीद्वयं तथा ।
त्रिगवा दानवाः केचिच्चतुरोजास्तथापरे ।
षडश्वाः सप्तमातङ्गाः पञ्चमाहिषिकाः परे ।

---

21

(L. 21) Kumbh. ed. परं सृष्टिम् (for परं वस्तु). —(L. 30) ❀ **Cv**: छिनत्त्येव भृगुर्यथा, भृगुर्यथा शापेनाग्निं नाशितवांस्तथा ज्ञानी भवाग्निं छिनत्ति। ❀ —(L. 31) Kumbh. ed. समापन्नं; **Cv** (gloss: सम्यगापदं प्राप्तः, अयं जीवः) °पन्नो (as above). —(L. 32) ❀ **Cv**: अभ्यन्तरः, अन्तर्यामी नारायणः। —(L. 35-36) ❀ **Cv**: समापन्नः, सम्यग्ज्ञातः। सुषुप्त्याख्यः, सुषुप्तिम् अ¹, सम्यक्ख्यापयति ज्ञापयतीति सुषुप्त्याख्यः। आवरणावृतः, अज्ञानावृतः। ❀ —(L. 38) Kumbh. ed. निष्क्रियं. —(L. 40-41) ❀ **Cv**: प्रातिभासिकं प्रतिभासयोग्यं वस्तु, तत्सामान्यात् साम्यात्, बुद्धेर्या संविदात्मका अवस्था भवेत्। स्फुलिङ्गसत्त्वसदृशात्तृणादेरग्निभावः यथा भवेत्। ❀ —(L. 42) ❀ **Cv**: अन्यथा, अनात्मया स्थितेषु देहादिषु आत्मभावो भवति। ❀ —(L. 50) ❀ **Cv**: वाचकं, कृष्णरामादिनाम्नां वाचकं यदिन्द्रियम्। ❀ Kumbh. ed. संसरे तद्भवेत्तदा (for the post. half). —(L. 62-63) ± Kaṭha Up. II. 3. 9; Śvet. Up. 4. 20.

रात्रौ दधि च सक्तूंश्च नित्यमेवाविवर्जिता ।
अन्तर्दशाहे चाश्नन्ति गवां क्षीरं विचेतनाः ।
क्रमदोहं न कुर्वन्ति वत्सस्तन्यानि भुञ्जते ।
अनाथां कृपणां भार्यां घ्नन्ति नित्यं शपन्ति च ।
शूद्रान्नपुष्टा विप्रास्तु निर्लज्जाश्च भवन्त्युत ।
संकीर्णानि च धान्यानि नात्यवेक्षत्कुटुम्बिनी ।
मार्जारकुक्कुटश्वानैः क्रीडां कुर्वन्ति मानवाः ।
गृहे कण्टकिनो वृक्षास्तथा निष्पाव[? प्पर्ण]वल्लरी ।
यज्ञियाश्च तथा वृक्ष्यास्तेषामासन्दुरात्मनाम् ।
कूपस्नानरता नित्यं पर्वमैथुनगामिनः ।
तिलानश्नन्ति रात्रौ च तैलाभ्यक्ताश्च शेरते ।
विभीतककरञ्जानां छायामूलनिवासिनः ।
करवीरं च ते पुष्पं धारयन्ति च मोहिताः ।
पद्मबीजानि खादन्ति पुष्पं जिघ्रन्ति मोहिताः ।
न भोक्ष्यन्ति तथा नित्यं दैत्याः कालेन मोहिताः ।
निन्दन्ति स्तवनं विष्णोस्तस्य नित्यद्विषो जनाः ।
होमधूमो न तत्रासीद्वेदघोषस्तथैव च ।
यज्ञाश्च न प्रवर्तन्ते यथापूर्वं गृहे गृहे ।
शिष्याचार्यक्रमो नासीत्पुत्रैरात्मपितुः पिता ।
विष्णुं ब्रह्मण्यदेवेशं हित्वा पाषण्डमाश्रिताः ।
हव्यकव्यविहीनाश्च ज्ञानाध्ययनवर्जिताः ।
देवस्वादानरुचयो ब्रह्मस्वरूचयस्तथा ।
स्तुतिमङ्गलहीनानि देवस्थानानि सर्वशः ।

## 23

After 12. 221. 94, Kumbh. ed. ins.:

संस्मृत्य बुद्धीन्द्रियगोचरातिगं
स्वगोचरे सर्वकृतालयं तम् ।
हरिं महापापहरं जनास्ते
संस्मृत्य संपूज्य विधूतपापाः ।
यमैश्च नित्यं नियमैश्च संयता-
स्तत्त्वं च विष्णोः परिपश्यमानाः ।
देवानुसारेण विमुक्तियोगं
ते गाहमानाः परमाप्नुवन्ति ।
एवं राजेन्द्र सततं जपहोमपरायणः ।
वासुदेवपरो नित्यं ज्ञानध्यानपरायणः ।
दानधर्मरतिर्नित्यं प्रजास्त्वं परिपालय ।
वासुदेवपरो नित्यं ज्ञानध्यानपरायणात् ।
विशेषेणार्चयेथास्त्वं सततं पर्युपास्व च ।

## 24

After 12. 222. 24, Kumbh. ed Cv ins :

एतच्छ्रुत्वा मुनेस्तस्य वचनं देवलस्तथा ।
तदधीनोऽभवच्छिष्यः सर्वद्वंद्वविनिष्ठितः ।
अथान्यत्तु पुरा वृत्तं जैगीषव्यस्य धीमतः ।
शृणु राजन्नवहितः सर्वज्ञानसमन्वितः ।
यमाहुः सर्वलोकेशं सर्वलोकनमस्कृतम् ।
अष्टमूर्तिं जगन्मूर्तिमिष्टसंधिविभूषितम् ।
यं प्राप्ता न विषीदन्ति न शोचन्त्युद्विजन्ति च ।
यस्य स्वाभाविकी शक्तिरिदं विश्वं चराचरम् ।
यानि सृजति सर्वात्मा स देवः परमेश्वरः ।
मेरोरुत्तरपूर्वे तु सर्वरत्नविभूषिते ।
अचिन्त्ये विमले स्थाने सर्वर्तुकुसुमान्विते ।
वृक्षैश्च शोभते नित्यं दिव्यवायुसमीरिते ।
नानाभूतगणैर्युक्तः सर्वदेवनमस्कृतः ।
तत्र विद्याधरगणा गन्धर्वाप्सरसां गणाः ।
लोकपालाः समुद्राश्च नद्यः शैलाः सरांसि च ।
ऋषयो वालखिल्याश्च यज्ञाः स्तोभाह्वयास्तथा ।
उपासांचक्रिरे देवं प्रजानां पतयस्तथा ।
तत्र रुद्रो महादेवो देव्या चैव सहोमया ।
आस्ते वृषध्वजः श्रीमान्सोमसूर्याग्निलोचनः ।
तत्रैवं देवमालोक्य देवी धात्री विभावरी ।
उमा देवी परेशानमपृच्छद्विनयान्विता ।
अर्थः कोऽथार्थशक्तिः का भगवन्ब्रूहि मेऽर्थितः ।
तयैवं परिपृष्टोऽसौ प्राह देवो महेश्वरः ।
अर्थोऽहमर्थशक्तिस्त्वं भोक्ताहं भोज्यमेव च ।
रूपं विद्धि महाभागे प्रकृतिस्त्वं परो ह्यहम् ।
अहं विष्णुरहं ब्रह्मा ह्यहं यज्ञस्तथैव च ।
आवयोर्न च भेदोऽस्ति परमार्थस्ततोऽबले ।
तथापि विद्यते भेदं किं मां त्वं परिपृच्छसि ।
एवमुक्ता ततः प्राह ह्यधिकं ह्येतयोर्वद ।
श्रेष्ठं वेद महादेव नम इत्येव भामिनी ।

---

22

(L. 13) Kumbh. ed. वृक्षास्; Cv (gloss : छेद्यास्) वृक्ष्यास् (as above).

24

(L. 29) ❀ Cv : एतयोः, अर्थार्थशक्त्योर्मध्ये । ❀ — (L. 33) ❀ Cv : आपरा, परमात्मा नारायणो यावत्पर्यन्तं तिष्ठति

तदन्तरे स्थितो विद्वान्वसुरूपो महामुनिः ।
जैगीषव्यः स्मयन्प्राह ह्यर्थ इत्येव नादयन् ।
श्रेष्ठोऽन्योऽस्मान्महीपिण्डा तल्लीना शक्तिरापरा ।
मुद्रिकादिविशेषेण विस्तृता संभृतेति च ।
तच्छ्रुत्वा वचनं देवी कोऽसावित्यब्रवीद्रुषा ।
वाक्यमस्याद्य संभङ्क्त्वा प्रोक्तवानिति शंकरम् ।
तच्छ्रुत्वा निर्गतो धीमानाश्रमं स्वं महामुनिः ।
स्थानात्स्वर्गगणे विद्वान्योगैश्वर्यसमन्वितः ।
ततः प्रहस्य भगवान्सर्वपापहरो हरः ।
प्राह देवीं प्रशान्तात्मा जैगीषव्यो महामुनिः ।
भक्तो मम सखा चैव शिष्यश्चात्र महामुनिः ।
जैगीषव्य इति ख्यातः प्रोक्त्वासौ निर्गतः शुभे ।
तच्छ्रुत्वा साथ संक्रुद्धा न न्याय्यं तेन वै कृतम् ।
विकृताहं त्वया देव मुनिना च तथा कृता ।
अतज्ज्ञादथ देवेश मध्ये प्राप्तं न तच्छ्रुतम् ।
तच्छ्रुत्वा भगवानाह महादेवः पिनाकभृत् ।
निरपेक्षो मुनिर्योगी मामुपाश्रित्य संस्थितः ।
निर्द्वंद्वः सततं धीमान्समरूपस्वभावधृत् ।
तस्मात्क्षमस्व तं देवि रक्षितव्यस्त्वया च सः ।
इत्युक्ता प्राह सा देवी मुनेस्तस्य महात्मनः ।
निराशत्वमहं द्रष्टुमिच्छाम्यन्तकनाशन ।
तथेति चोक्त्वा तां देवो वृषमारुह्य सत्वरम् ।
देवगन्धर्वसंघैश्च स्तूयमानो जगत्पतिः ।
अजरामरशुद्धात्मा यत्रास्ते स महामुनिः ।
इतस्ततः समाहृत्य वीरसंघैर्महायशाः ।
देहप्रावरणार्थं वै संसरन्स तदा मुनिः ।
प्रत्युद्गम्य महादेवं यथार्हं प्रतिपूज्य च ।
पुनः स पूर्ववत्कन्थां सूच्या सूत्रेण सूचयत् ।
तमाह भगवाञ्शंभुः किं प्रदास्यामि ते मुने ।
वृणीष्व मत्तः सर्वं त्वं जैगीषव्य यदीच्छसि ।
नावलोकयमानस्तु देवदेवं महामुनिम् ।
अनवाप्तं न पश्यामि त्वत्तो गोवृषभध्वज ।
कृतार्थः परिपूर्णोऽहं यत्ते कार्यं तु गम्यताम् ।
प्रहसंस्तु पुनः शर्वो वृणीष्वेति तमब्रवीत् ।
अवश्यं हि वरो मत्तः श्राव्यं वरमनुत्तमम् ।
जैगीषव्यस्तमाहेदं श्रोतव्यं च त्वया मम ।
सूचीमनु महादेव सूत्रं समनुगच्छतः[तु] ।
ततः प्रहस्य भगवान्गौरीमालोक्य शंकरः ।
स्वस्थानं प्रययौ हृष्टः सर्वदेवनमस्कृतः ।
एतत्ते कथितं राजन्यन्मात्वं परिपृच्छसि ।
निर्द्वंद्वा योगिनो नित्याः सर्वशस्ते स्वयंभुवः ।

Colophon.

## 25

After 12. 223. 23, Kumbh. ed. **Cv** ins.:

इत्युक्तः संप्रशस्यैनमुग्रसेनो गतो गृहात् ।
आस्ते कृष्णस्तथैकान्ते पर्यङ्के रत्नभूषिते ।
कदाचित्तत्र भगवान्प्रविवेश महामुनिः ।
तमभ्यर्च्य यथान्यायं तूष्णीमास्ते जनार्दनः ।
तं खिन्नमिव संलक्ष्य केशवं वाक्यमब्रवीत् ।
किमिदं केशव तव वैमनस्यं जनार्दन ।
अभूतपूर्वं गोविन्द तन्मे व्याख्यातुमर्हसि ।

श्रीवासुदेव उवाच ।

नासुहृत्परमं मेऽद्य नापदोऽर्हति वेदितुम् ।
अपण्डितो वापि सुहृत्पण्डितो वाप्यनात्मवान् ।
स त्वं सुहृच्च विद्वांश्च जितात्मा श्रोतुमर्हसि ।
अप्येतद्धृदि यद्दुःखं तद्भवाञ्श्रोतुमर्हति ।
दास्यमैश्वर्यवादेन ज्ञातीनां च करोम्यहम् ।
द्विषन्ति सततं क्रुद्धा ज्ञातिसंबन्धिबान्धवाः ।
दिव्या अपि तथा भोगा दत्तास्तेषां मया पृथक् ।
तथापि च द्विषन्तो मां वर्तन्ते च परस्परम् ।

नारद उवाच ।

अनायसेन शस्त्रेण परिमृज्यानुमृज्य च ।
जिह्वामुद्धर चैतेषां न वक्ष्यन्ति ततः परम् ।

---

तावत्पर्यन्तं विद्यमाना । तल्लीना, प्रलयेऽपि पत्या सह स्थिता लक्ष्मीः । प्रलयेऽपि विद्यमानस्य वेदस्यार्थो नारायण एव, अर्थशक्तिस्तु श्रीरेव । युवयोस्तु प्रलये निद्रितत्वात् नार्थत्वं नाप्यर्थशक्तित्वम् । अतो विप्रलम्भार्थं कथितं शिववाक्यं भवद्भिर्न विश्वसनीयमिति भावः । ❀ —(L. 34) ❀ **Cv**: मुद्रिकादिविशेषेण, मुद्रिकाभरणादिभगवदाभरणरूपेण विस्तृता । संभृता, सं, सम्यक्, वक्षसि भृता, लक्ष्मीरिति पूर्वेणान्वयः । ❀ —(L. 44) ❀ **Cv**: विकृता, विशिष्टीकृता तथा [अ]कृता, व्यर्थीकृता । ❀ —(L. 54) ❀ **Cv**: अजरामरशुद्धात्मा, अजरामरे, नारायणे शुद्धः आत्मा चित्तं यस्य सः । ❀ — Colophon. *Adhy. name*: असितजैगीषव्यसंवादः ·

25

(L. 12) cf. 12. 82. 5$^{ab}$. ❀ **Cv** ऐश्वर्यवादेन, ईश्वरोऽधि-

भगवानुवाच ।

अनायसं कथं विन्द्यां शस्त्रं मुनिवरोत्तम ।
येनैषामुद्धरे जिह्वां ब्रूहि तन्मे यथातथम् ।

नारद उवाच ।

गोहिरण्यं च वासांसि रत्नाद्यं यद्धनं बहु ।
आस्ये प्रक्षिप चैतेषां शस्त्रमेतदनायसम् ।
सुहृत्संबन्धिमित्राणां गुरूणां स्वजनस्य च ।
आख्यातं शस्त्रमेतद्धि तेन छिन्धि पुनः पुनः ।
तवैश्वर्यप्रदानानि श्लाघ्यमेषां वचांसि च ।
समर्थं त्वामभिज्ञाय प्रवदन्ति च ते नराः ।

भीष्म उवाच ।

ततः प्रहस्य भगवान्संपूज्य च महामुनिम् ।
तथाकरोन्महातेजा मुनिवाक्येन चोदितः ।
एवंप्रभावो ब्रह्मर्षिर्नारदो मुनिसत्तमः ।
पृष्टवानसि यन्मां त्वं तदुक्तं राजसत्तम ।
सर्वधर्महिते युक्ताः सत्यधर्मपरायणाः ।
लोकप्रियत्वं गच्छन्ति ज्ञानविज्ञानकोविदाः ।

Colophon.

## 26

After 12 224 10., Kumbh. ed. Cv ins.:

पृच्छतस्तव सत्पुत्र यथावत्कीर्तयाम्यहम् ।
शृणुष्वावहितो भूत्वा यथावृतमिदं जगत् ।
कार्यादि कारणान्तं यत्कार्यान्तं कारणादिकम् ।
ज्ञानं तदुभयं वित्त्वा सत्यं च परमं शुभम् ।
ब्रह्मेति चाभिविख्यातं तद्वै पश्यन्ति सूरयः ।
ब्रह्म तेजोमयं भूतं भूतकारणमद्भुतम् ।
आसीदादौ ततस्त्वाहुः प्राधान्यमिति तद्विदः ।
त्रिगुणां तां महामायां वैष्णवीं प्रकृतिं विदुः ।
तदीदृशमनाद्यन्तमव्यक्तमजरं ध्रुवम् ।
अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे विकृतं च तत् ।
तद्वै प्रधानमुद्दिष्टं त्रिसूक्ष्मं त्रिगुणात्मकम् ।
सम्यग्योगगुणं स्वस्थं तदिच्छाक्षोभितं महत् ।
शक्तित्रयात्मिका तस्य प्रकृतिः कारणात्मिका ।
अस्वतन्त्रा च सततं विदधिष्ठानसंयुता ।
स्वभावाख्यं समापन्ना मोहविग्रहधारिणी ।
त्रिविधस्यास्य जीवस्य भोगार्थं समुपागता ।
यथा संनिधिमात्रेण गन्धः क्षोभाय जायते ।
मनस्तद्वदशेषस्य परात्पर इति स्मृतः ।
स्रष्टा प्रविश्य तत्तस्मिन्क्षोभयामास विष्ठितः ।
सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् ।
प्रधानतत्त्वादुद्भूतो महत्त्वाच्च महान्स्मृतः ।
प्रधानतत्त्वमुद्भूतं महत्तत्त्वं समावृणोत् ।
कालात्मनाभिभूतं तत्कालोंऽशः परमात्मनः ।
पुरुषश्चाप्रमेयात्मा स एव इति गीयते ।
त्रिगुणोऽसौ महाञ्जातः प्रधान इति वै श्रुतिः ।
सात्त्विको राजसश्चैव तामसश्च त्रिधात्मकः ।
त्रिविधोऽयमहंकारो महत्तत्त्वादजायत ।
तामसोऽसावहंकारो भूतादिरिति संज्ञितः ।
भूतानामादिभूतत्वाद्रक्ताहिस्तामसः स्मृतः ।
भूतादिः स विकुर्वाणः शिष्टं तन्मात्रकं ततः ।
ससर्ज शब्दं तन्मात्रमाकाशं शब्दलक्षणम् ।
शब्दलक्षणमाकाशं शब्दतन्मात्रमावृणोत् ।
तेन संपीड्यमानस्तु स्पर्शमात्रं ससर्ज ह ।
शब्दमात्रं तदाकाशं स्पर्शमात्रं समावृणोत् ।
ससर्ज वायुस्तेनासौ पीड्यमान इति श्रुतिः ।
स्पर्शमात्रं तदा वायू रूपमात्रं समावृणोत् ।
तेन संपीड्यमानस्तु सम्सर्जाग्निमिति श्रुतिः ।
रूपमात्रं ततो वह्निं समुत्सृज्य समावृणोत् ।
तेन संपीड्यमानस्तु रसमात्रं ससर्ज ह ।
रूपमात्रगतं तेजो रसमात्रं समावृणोत् ।
तेन संपीड्यमानस्तु ससर्जाम्भ इति श्रुतिः ।
रसमात्रात्मकं भूयो रसं तन्मात्रमावृणोत् ।
तेन संपीड्यमानस्तु गन्धं तन्मात्रकं ततः ।
ससर्ज गन्धं तन्मात्रमावृणोत्करकं तथा ।
तेन संपीड्यमानस्तु काठिन्यं च ससर्ज ह ।
पृथिवी जायते तस्माद्गन्धतन्मात्रजात्तथा ।
अम्मयं सर्वमेवेदमापस्तस्तम्भिरे पुनः ।

---

पतिः, तस्य भावः ऐश्वर्यं, तस्य वादेन । ❀ — Colophon. *Adhy. name:* कृष्णनारदसंवादः ( cf. 12. 82 ).

26

( L. 4 ) ❀ **Cv**: वित्त्वा, विदित्वा । ❀ — ( L. 10 ) Kumbh. ed. वैकृतं; **Cv** ( gloss: कार्याकारेण परिणतम् ) विकृतं ( as above ). — ( L. 11 ) ❀ **Cv**: त्रिसूक्ष्मं, श्रीभूर्दुर्गात्मिका देव्यस्त्रिविधाणुना महिमानिन्यो यस्य तत् त्रिसूक्ष्मम् । ❀ — ( L. 32 ) ❀ **Cv**: शब्द एव लक्षणं यस्य तदाकाशं स्वोपादानीभूतशब्दतन्मात्रमावृणोत्, तेनाविनाभूतं स्थितमित्यर्थः । ❀ — ( L. 44 ) ❀ **Cv**: करकं, जलमयोपलं — वर्षोपलस्तु करक

भूतानीमानि जातानि पृथिव्यादीनि वै श्रुतिः ।
भूतानां मूर्तिरेवैषामन्नं चैषां मता बुधैः ।
तस्मिंस्तस्मिंस्तु तन्मात्रा तन्मात्रा इति ते स्मृताः ।
तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ।
एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ।
एषामुद्धर्तकः कालो नानाभेदवदास्थितः ।
परमात्मा च भूतात्मा गुणभेदेन संस्थितः ।
एक एव त्रिधा भिन्नः करोति विविधाः क्रियाः ।
ब्रह्मा सृजति भूतानि पाति नारायणोऽव्ययः ।
रुद्रो हन्ति जगन्मूर्तिः काल एष क्रियाबुधः ।
कालोऽपि तन्मयोऽचिन्त्यस्त्रिगुणात्मा सनातनः ।
अव्यक्तोऽसावचिन्त्योऽसौ वर्तते भिन्नलक्षणः ।
कालात्मना त्विदं भिन्नमभिन्नं श्रूयते हि यत् ।

## 27

After 12. 241. $5^{ab}$, G2.7 ins.:

जययुक्तो रथो दिव्यो ब्रह्मलोके महीयते ।
अथ सत्वरमासाद्य रथमेवं युयुक्षतः ।
अक्षरं गन्तुमनसो विधिं वक्ष्यामि शीघ्रगम् ।
सप्तयोधायनं कृत्स्ना वान्यतः प्रतिपद्यते ।
पृष्ठतः पार्श्वतश्चान्या यावन्त्यास्याः प्रसारणात् ।
क्रमशः पार्थिवं यच्च वायव्यं खं तथा पयः ।
ज्योतिषो यत्तदैश्वर्यमहंकारस्य बुद्धितः ।
अव्यक्तस्य यदैश्वर्यं क्रमशः प्रतिपद्यते ।
व्यक्तमाश्चापि (sic) यस्यैते तथा युक्तेन योगतः ।
तथास्यं भवयुक्तस्य विधिमात्मनि पश्यतः ।
निर्मथ्यमानं सूक्ष्मात्मा रूपाणीमानि दर्शयेत् ।
शैशिरस्तु यथा धूमः सूक्ष्मं संश्रयते नभः ।
तथा देहाद्विमुक्तस्य पूर्वरूपं तदप्युत ।
अथ धूमस्य विरमे द्वितीयं रूपदर्शनम् ।
जलरूपमिवाकाशं तत्रैवात्मनि पश्यति ।
अपरं व्यतिक्रमेच्चापि वह्निरूपं प्रकाशते ।
तस्मिन्नुपरते वास्य वायव्यं सूक्ष्ममप्यथ ।
रूपं प्रकाशते तत्र पीतवर्णवदप्यजः ।
तस्मिन्नुपरते रूपमाकाशस्य प्रकाशते ।
ऊष्मा सवर्णरूपं तत्तस्य रूपं प्रकाशते ।
तस्मिन्नुपरते वास्य बुद्धिरूपं प्रकाशते ।
सुशुक्लं चेतसः सम्यगव्यक्ते ब्राह्मणस्य वै ।
एतेष्वपीह जातेषु फलजातानि मे शृणु ।
जातस्य पार्थिवैश्वर्यैः सृष्टिरेषा विधीयते ।
प्रजापतिरिवाक्षोभ्यः शरीरात्सृजति प्रजाः ।
वर्णतो गृह्यते वाप्सु नायं पिबति चाशयाः ।
स्वाचास्य( sic ) तेजसा रूपं दह्यते शाम्यते तथा ।
अङ्गुल्याङ्गुष्ठमात्रेण वस्त्रपाटेनवत्तथा ( sic ) ।
पृथिवीं कम्पयन्त्येते गुणापायादिति स्मृतः ।
आकाशभूतश्चाकाशे स्वर्णस्त्वान्न च दृश्यते ।
अहंकारस्य विजये पञ्च ते स्युर्वशानुगाः ।
षण्णामात्मनि बुद्धौ तु नितार्यं ( sic ) प्रभवत्युत ।
निर्दोषप्रभवा ह्येषा कृत्स्ना समभिवर्तते ।
तथैव व्यक्तमात्मानमव्यक्तं प्रतिपद्यते ।
यतो निःसरते लोको भवति व्यक्तसंज्ञकः ।
तत्रासन्नमयीं व्याख्यां शृणु त्वं विस्तरेण वै ।
तथा व्यक्तमयीं चैव व्याख्यां पूर्वं निबोध मे ।
पञ्चविंशतितत्त्वानि तुल्यान्युभयतः समम् ।
योगे सांख्येऽपि च तथा विशेषांस्तत्र मे शृणु ।
प्रोक्तं तद्व्यर्थमित्येव जायते वर्तते च यत् ।
जीवते म्रियते चैव चतुर्भिर्लक्षणैर्युतम् ।
विपरीतमतो यत्तदव्यक्तं समुदाहृतम् ।
पापात्मानौ च देवेषु सिद्धान्तेष्वप्युदाहृतौ ।
चतुर्लक्षणजन्तुर्यश्चतुर्वर्गः प्रचक्षते ।
व्यक्तमव्यक्तजं चैव तथा बुद्धिरथेतरत् ।
सत्त्वं क्षेत्रज्ञ इत्येतद्द्वयमव्यक्तदर्शनम् ।
द्वावात्मानौ च देवेषु विषयेषु च राजतः ।
विषयान्प्रतिसंहारः सालोकं सिद्धिलक्षणम् ।
निर्ममश्चानहंकारो निर्द्वंद्वश्छिन्नसंशयः ।
नैव क्रुध्यति न द्वेष्टि नात्मता भवतो गिरः ।
आक्रुष्टस्ताडितश्चापि मैत्रं ध्यायति नाशुभम् ।
वाङ्मनःकायदण्डानां त्रयाणां च निवर्तकम् ।
समः सर्वेषु भूतेषु ब्रह्माणमतिवर्तते ।
नैवेच्छति न चानिच्छन्यात्रामात्रव्यवस्थितः ।
अलोलुपोऽप्यथो दान्तो नाकृतिर्न निराकृतिः ।
नास्येन्द्रियमनःप्राणबुद्धयः सर्वसाक्षिणः ।

---

इत्यमरः ( 1. 11 ) ꕥ —( L. 60 ) ꕥ Cv : कालात्मना विष्णुना सह इदं मूर्तिचतुष्टयं भिन्नं, भिन्नकार्याय चतुर्धा अवतीर्णम् । अभिन्नं, एकीभूय स्थितं मूलरूपम् । ꕥ

27

( L. 2 ) G2 युयुक्षतः. — ( L. 4 ) G7 कृत्या ( for कृत्स्ना ). —( L. 29 ) G2 कंपयन्नेते. —( L. 37 ) G2 यथा ( for तथा ).

## 28

After 12. 274, N (Ś1 missing: K3.5 B1-5 Da1. a3 Dn2 n3 D1 G4.5 M2-4 absent) Kumbh. ed. ins.:

जनमेजय उवाच ।

प्राचेतसस्य दक्षस्य कथं वैवस्वतेऽन्तरे ।
विनाशमगमद्ब्रह्मन्हयमेधः प्रजापतेः ।
देव्या मन्युकृतं मत्वा क्रुद्धः सर्वात्मकः प्रभुः ।
प्रसादात्तस्य दक्षेण स यज्ञः संधितः कथम् ।
एतद्वेदितुमिच्छामि तन्मे ब्रूहि यथातथम् ।

वैशंपायन उवाच ।

पुरा हिमवतः पृष्ठे दक्षो वै यज्ञमाहरत् ।
गङ्गाद्वारे शुभे देशे ऋषिसिद्धनिषेविते ।
गन्धर्वाप्सरसाकीर्णे नानाद्रुमलतावृते ।
ऋषिसंघैः परिवृतं दक्षं यज्ञभृतां वरम् ।
पृथिव्यामन्तरिक्षे च ये च स्वर्लोकवासिनः ।
सर्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिम् ।
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।
हाहा हूहूश्च गन्धर्वौ तुम्बुरुर्नारदस्तथा ।
विश्वावसुर्विश्वसेनो गन्धर्वाप्सरसस्तथा ।
आदित्या वसवो रुद्राः साध्याः सह मरुद्गणैः ।
इन्द्रेण सहिताः सर्वे आगता यज्ञभागिनः ।
ऊष्मपाः सोमपाश्चैव धूमपा आज्यपास्तथा ।
ऋषयः पितरश्चैव आगता ब्रह्मणा सह ।

---

28

*** This passage is substantially the same as Vāyupurāṇa I. 30. 79ff. and Brahmapurāṇa adhy. 38-40. The variants from the Purāṇas are listed in the critical notes that follow, which register the *pāṭhabhedas* from the N recension.

B P. ऋषयः (for जनमेजय उवाच). — (L. 1) K1.2.4.7 D4.5.7.9 वै(D4 वे)वस्वतेंतरे काले (K7 D4.9 राजा; D5.7 कस्माद्) (for the prior half). K1.2.4 कस्य; K7 D4.5.7.9 दक्षः (for कथं). K1.2.4.7 D4.5.7.9 प्राचेतसो (for वैवस्वते). K1.4 नृप; K2 द्विज; K7 D4.9 स्म ह; D5.7 स्म हि (for ऽन्तरे). — (L. 2) K1.2 D5 कस्माद्; K4 कोशाद्; K7 D4.9 तस्य; V. P. सुत (for ब्रह्मन्). K1 हयमेधाः (for °मेधः). K1 प्रजापते; B6.7.9 Da3.a4 D7 स तस्य हि (B9 D7 वै); Dn4 Ds1 प्रजायते (for °पतेः). D5 हयमेधस्य तस्य हि (for the post. half). — After line 2, Kumbh. ed. ins.:

कथं स चाभवद्ब्रह्मन्हयमेधः प्रजापतेः ।

— (L. 3) K7 D9 मन्युकृते; V. P. मृत्युं कृतं (for मन्युकृतं). B. P. बुद्ध्वा (for मत्वा). B8 (marg. as above) V. P. क्रुद्धं सर्वात्मकं प्रभुं (for the post. half). — B P. om. lines 4-7. — (L. 4) K1.2.4.7 D4.9 प्रसादमगमद्दक्षे (K4.7 D4.9 °त्तस्य); B8 (marg. as above) V. P. कथं प्र(V. P. प्रा)सादयद्दक्षः (for the prior half). K1.2.4 संहृतः; K6 संनिभः; Da3.a4 संधितं; D5.7 V. P. साधितः; D6 संशितः (for संधितः). — (L. 5) K6.7 B0 Dn1.n4 D3 D2.3.6.8 इच्छेयं; Da3 lacuna; V. P. इच्छामह (for इच्छामि). V. P. नो (for मे). — (L. 6) Da3 यज्ञं (for दक्षो). D3 दक्षम् (for यज्ञम्). K6 D7 V. P. आरभत् (for आहरत्). — (L. 7) Da4 reads शुभे twice. V1 -संघ- (for -सिद्ध-). — (L. 8) K4 गंधर्वाप्सरसाकीर्णो; V. P. B. P. °कीर्णं (for the prior half). V1 -लतान्विते; Da3.a4 °कुले; V. P. B. P. °वृतं (for °वृते). — (L. 9) K2 ऋषिसंगैः; Da4 B. P. ऋषिसिद्धैः (for °संघैः). K1.2.4.7 V1 D4.9 परिवृते (K7 D4.9 °तो) (for °तं). K7 D4.9 दक्षो; Dn4 मोक्षं (for दक्षं). K4 B0.8 Da4 Dn1.n4 D3 D2.3.6.8 धर्मभृतां (for यज्ञ°). K7 D4.9 वरः; D6 lacuna (for वरम्). — (L. 10) K7 V1 B0.6-9 Da3 Ds1 V. P. अंतरीक्षे (for अन्तरिक्षे). V. P. वा (for the first च). Da3 om. ये. K1 Da3 om. the second च. — (L. 11) K1.2 चोपतस्थुः (for उपतस्थुः). — V. P. B. P. om. lines 12-14. — (L. 13) K1.2 B8 (marg.) हाहा हूहू च (for हाहा हूहूश्च). K6 गंधर्वास्; D4 गंधर्वस् (for °र्वौ). K1 तुंबुरुं; K6 D4.9 तुंबरुर्; Da4 °बरौ; Ds1 तुंबुतुर् (for तुम्बुरुर्). K6 D9 तदा (for तथा). — D6 om. (hapl.) line 14. D7 om. (hapl.) lines 14-17. V1 reads line 14 on marg. — (L. 14) K2 [अ]प्सरसास् (for °रसस्). — D5 om. (hapl.) lines 15-17. — (L. 15) B. P. साध्याः सर्वे मरुद्गणाः (for the post. half). — (L. 16) V. P. जिष्णुना; B. P. विष्णुना (for इन्द्रेण). B8 (marg. as above) आहूता (for आगता). — (L. 17) K6.7 Ds1 D3 उष्मपाः (Ds1 °याः) (for ऊष्मपाः). B. P. धूमपाश् (for सोमपाश्). V1 सर्वे (for चैव). Ds1 धूम्रपा (for धूमपा). K1 (both times) reads the post. half twice. V. P. आज्यपा धूमपास्तथा; B. P. आज्यपाः सोमपास्तथा (for the post. half). — (L. 18) V. P. अश्विनौ (for ऋषयः). K2.4 आगता; D4.9 अनादि- (for आगता). — For line 18, B. P. subst.:

अश्विनौ मरुतश्चैव नानादेवगणैः सह ।

एते चान्ये च बहवो भूतग्रामश्चतुर्विधः ।
जरायुजाण्डजाश्चैव स्वेदजोद्भिदजास्तथा ।
आहूता मन्त्रिताः सर्वे देवाश्च सह पत्निभिः ।
विराजन्ते विमानस्था दीप्यमाना इवाग्नयः ।
तान्दृष्ट्वा मन्युनाविष्टो दधीचिर्वाक्यमब्रवीत् ।
नायं यज्ञो न वा धर्मो यत्र रुद्रो न इज्यते ।
वधबन्धं प्रपन्ना वै किं नु कालस्य पर्ययः ।
किं नु मोहान्न पश्यन्ति विनाशं पर्युपस्थितम् ।
उपस्थितं भयं घोरं न बुध्यन्ति महाध्वरे ।
इत्युक्त्वा स महायोगी पश्यति ध्यानचक्षुषा ।
स पश्यति महादेवं देवीं च वरदां शुभाम् ।
नारदं च महात्मानं दृष्ट्वा देव्याः समीपतः ।
संतोषं परमं लेभे इति निश्चित्य योगवित् ।
एकमन्त्रास्तु ते सर्वे येनेशो न निमन्त्रितः ।
तस्माद्देशादपक्रम्य दधीचिर्वाक्यमब्रवीत् ।
अपूज्यपूजने चैव पूज्यानां चाप्यपूजने ।
त्रिपातकसमं पापं शश्वत्प्राप्नोति मानवः ।
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
देवतानामृषीणां च मध्ये सत्यं ब्रवीम्यहम् ।
आगतं पशुभर्तारं स्रष्टारं जगतः पतिम् ।

— V1 reads line 19 on marg. — (L. 19) D4 वान्ये (for चान्ये). K1. 2. 4 Da3 Dn1. n4 D8 D2. 8. 8 V. P. भूतग्रामाश्च् (for °ग्रामश्च्). K1. 2. 4 Dn1. n4 D8 D2. 8 चतुर्विधाः; V. P. B. P. तथैव च (for चतुर्विधः). — (L. 20) B7. 8 स्वेदजा उद्भिजास्; B8 (marg.) सहजोद्भिदजास्; D5. 7 स्वेदजोद्भिज्जजास्; V. P. °द्भिज्जकास् (for °जोद्भिद-जास्). B0 Dn1. n4 D8 D2. 3. 6. 8 सहसा स्वेदजोद्भिजैः; B. P. तथैव स्वेदजोद्भिदः (for the post. half). — (L. 21) V. P. मंत्रतः (for मन्त्रिताः). B8 (marg. as above) चैव (for सर्वे). K2. 4 मंत्रिभिः; Da4 पत्तिभिः; D4. 9 पत्रिभिः; Ca (gloss: पत्निभिरिति छान्दसं ह्रस्वत्वम्) पत्निभिः (as above). — For line 21, B. P. subst.:

आगताः सत्रिणः सर्वे देवाः स्त्रीभिः सहर्षिभिः ।

— (L. 22) K7 D9 व्यराजंत; D6 विराजंत (for °जन्ते). D6 ग्रहाः (for [अ]ग्नयः). — (L. 23) V1 मन्युरा-विष्टो; B8 (marg. as above) Ds1 V. P. मन्युमा° (for मन्युना°). K1. 2. 6. 7 B8 (marg.) Da3. a4 D4. 5. 7. 9 दधीचो (for दधीचिर्). D9 (before corr.) आब्रवीत्; D9 (by corr.) अब्रवीत् (as above). — V. P. B. P. om. (hapl.) lines 24–33. Before 24, B8. 9 B. P. ins. दधीच (B9 °चिर्) उवाच. — (L. 24) B7 धर्मो (for यज्ञो). B7 [अ]नंगो (for धर्मो). K1 यत्र रुद्रेण; K2 न च रुद्रो न; K7 D4. 9 रुद्रो यत्र न (for यत्र रुद्रो न). K2 चेज्यते; B7 इष्यते; Da4 D7 युज्यते (for इज्यते). — (L. 25) K1. 2. 4. 7 D4. 9 वधकत्वं; Da4 बंधकत्वं; Ds1 वधं वधं (for वधबन्धं). K1. 2. 4. 7 D4. 9 प्रपन्नो; Da4 प्रसन्ना (for प्रप°). K6. 7 B8 (marg.) Da4 D2. 4. 9 किं तु; V1 को नु (for किं नु). ❀ Ca: पर्ययः विपर्यासः । ❀ — (L. 26) K6. 7 D9 किं तु (for किं नु). K1 B9 पर्युपाश्रितं; B8 (marg.) प्रत्युप° (for पर्युप°). — (L. 27) D4 om. उपस्थितं. Da4 Dn1 D2. 8 महा- (for भयं). K1. 2. 4 B8 (marg. as above) पश्यंति; K7 V1 D4 बुध्यंते; Ds1 बुध्यति; D9 बुध्येते (for बुध्यन्ति). D9 महीध्वरे (for महा°). — Before line 28, B8. 9 ins. वैशंपायन उवाच. — (L. 28) Da4 इत्युक्ता (for °क्त्वा). K1 महायोगीं; D4 °यागी (for °योगी). K1 Dn4 पश्यंति; V1 B8 (marg.) पर्येति (for पश्यति). D5. 7 ज्ञानचक्षुषा (for ध्यानच°). — (L. 29) K1 corrupt; K2. 4 महायोगी (for °देवं). K7 D4. 9 शिवां; D8 शुभं (for शुभाम्). — (L. 30) K4 V1 B0 Da3. a4 Dn1. n4 D8 D2. 3. 6. 8 तस्या (for दृष्ट्वा). — (L. 31) B8 (marg.) तोषं तु (for संतोषं). Da4 लेके (for लेभे). — (L. 32) K7 Da3. a4 एवंमंत्रास्तु (for एकमन्त्रास्तु). K1. 2. 4 D7 यैरीशो; K7 ये सर्वे; B0. 8 (marg.) येनासौ; D4 यतेशो (for येने°). — (L. 33) K2. 7 V1 D4. 5. 7. 9 अपाक्रम्य (for अपक्रम्य). K1. 2. 4. 6. 7 B6. 7. 9 Da3. a4 D4. 9 दधीचो (for दधीचिर्). — Before line 34, B8 ins. दधीच उवाच; B9 B. P. दधीचिरु°. D2 om. lines 34–35. — (L. 34) B8 (orig.) Dn1. n4 D8 D3. 6. 8 Kumbh. ed. -पूजनाच्; D4 corrupt (for -पूजने). Ds1 पूजानां (for पूज्यानां). K2 पूजने; B8 (orig.) Dn1. n4 D8 D3. 6. 8 Kumbh. ed. [अ]पूजनात्; B9 [अ]पूजयन् (for [अ]पूजने). — V. P. om. lines 35–39. — (L. 35) K4. 6 B0. 6 Dn1. n4 D8 D2–9 Kumbh. ed. Cap Cpp नृघातकसमं. ❀ Ca. p ब्रह्मवधसुरापानस्तेयानां (Ca: मिलितानां त्रयाणां) पातकानां तुल्यम् । ❀ K1. 2 पूरुषः (for मानवः). — For line 35, B. P. subst.:

नरः पापमवाप्नोति महद्वै नात्र संशयः ।

— B. P. om. lines 36–39. — (L. 36) K4 चोक्तपूर्वं; Da4 क्रोध° (for नोक्त°). Dn4 वक्षे (for वक्ष्ये). — (L. 37) D6 om. सत्यं. — (L. 38) D2 स्वागतं (for आ°). K1. 2 D4 पश्य; D9 पश्च- (for पशु-). Ds2 D4 जगतां; D7 च जगत्- (for जगतः). — (L. 39) K6 सर्वे तं (for सर्वेषां). K1. 2. 4. 7 B3 (marg.). 9 Da3 D5–7

अध्वरे ह्यग्रभोक्तारं सर्वेषां पश्यत प्रभुम् ।

दक्ष उवाच ।

सन्ति नो बहवो रुद्राः शूलहस्ताः कपर्दिनः ।
एकादशस्थानगता नाहं वेद्मि महेश्वरम् ।

दधीचिरुवाच ।

सर्वेषामेकमन्त्रोऽयं येनेशो न निमन्त्रितः ।
यथाहं शंकरादूर्ध्वं नान्यं पश्यामि दैवतम् ।
तथा दक्षस्य विपुलो यज्ञोऽयं न भविष्यति ।

दक्ष उवाच ।

एतन्मखेशाय सुवर्णपात्रे
हविः समस्तं विधिमन्त्रपूतम् ।
विष्णोर्नयाम्यप्रतिमस्य भागं
प्रभुर्विभुश्चाहवनीय एषः ।

देव्युवाच ।

किं नाम दानं नियमं तपो वा
कुर्यामहं येन पतिर्ममाद्य ।
लभेत भागं भगवानचिन्त्यो
भागस्य चार्धमथ वा तृतीयम् ।

वैशंपायन उवाच ।

एवं ब्रुवाणां भगवान्स्वपत्नीं
प्रहृष्टरूपः क्षुभितामुवाच ।
न वेत्सि मां देवि कृशोदराङ्गि

---

पश्यतां ( B9 Ds2 D8 °तः ) ( for पश्यत ). — After line 39, D3 D8 ins.:

लोकाध्यक्षं सुराध्यक्षं देवदेवं वृषाकपिम् ।
सर्वेषामन्तकर्तारं तं देवं पश्यत प्रभुम् ।
संहर्तारं च देवानां निर्मातारं तथैव च ।
सर्वेषामग्रभोक्तारं तं देवं पश्यत प्रभुम् ।

[ D3 om. ( hapl. ) lines 1–2. ]

— K2 om. lines 40–41. — ( L. 40 ) K7 D9 वै; V. P. B. P. मे ( for नो ). V1 reads from रुद्राः up to महेश्वरम् ( in line 41 ) on marg. — ( L. 41 ) K1 ( before corr. ) एकादशावास्थगतां; K1 ( by corr. ) V1 B6. 8 ( marg. ). 9 Da3. a4 V. P. °दशावस्थगता ( K1 °गतं ); K7 D4. 9 °दशस्थाः शतशो ( D4 °शा ) ( for the prior half ). V. P. B. P. नान्यं ( for नाहं ). B. P. विद्मो ( for वेद्मि ). B7 महेश्वरः ( for °श्वरम् ). K1. 2 दधीचः; D4. 9 देव्युवाच ( for दधीचिरु° ). — ( L. 42 ) K4 V1 B0. 8 ( marg. as above ) Da4 Dn1. n4 Ds2 D2–8 एव ( for एक- ). B7 -मंत्राणां; D4 -मंत्रायं ( for -मन्त्रोऽयं ). V. P. सर्वे निमंत्रिता देवा ( for the prior half ). V1 Da3 Dn1. n4 D8 D2. 3. 6. 8 Kumbh. ed. येनासौ न; V. P. येन ईशो; B. P. ममेशो न ( for येनेशो न ). — ( L. 43 ) B8 ( marg. also as above ) तथाहं; Da4 यथा हि; D5. 7 यस्याहं ( for यथाहं ). K1 नाहं; K2 नायं; B8 ( marg. ) अन्यां; D5. 7 नान्यां; D9 lacuna ( for नान्यं ). D5. 7 देवतां ( for दैवतम् ). — ( L. 44 ) K7 Da4 यथा; B8 ( marg. also as above ) तदा ( for तथा ). B8 यज्ञोयं ( for विपुलो ). K2 यज्ञो नायं; B8 विपुलो न ( for यज्ञोऽयं न ). D9 ( by corr. ) रुद्र ( for दक्ष ). — B. P. om. lines 45–48. — ( L. 45 ) K1. 7 D4. 9 मखेशस्य; V. P. मखे शूर ( for मखेशाय ). D4 सुवर्णपात्र- ( for °पात्रे ). — ( L. 46 ) K1. 2 समग्रं ( for °स्तं ). K4 D4. 9 -पूर्वं ( for -पूतम् ). — ( L. 47 ) D4 om. from मस्य up to पति ( in line 50 ). — Kumbh. ed. repeats line 48 after repetition of line 51. — ( L. 48 ) K6 हरिर्; B6. 7. 9 हविर्; V. P. प्रभोर् ( for प्रभुर् ). B6 भुजं; D5. 7 विभुं; V. P. विभो ( for विभुश् ). K1. 2 V. P. ह्याहवनीय; K7 D9 यो ह°; B6 D5 वाह° ( for चाह° ). B9 D5. 7 शेषः; V. P. नित्यं ( for एषः ). Dn4 देवा ऊचुः ( for देव्युवाच ). — ( L. 49 ) K7 D9 जप्यं ( for दानं ). K6 B6–8 Da3. a4 D5. 7 नियतं ( for °मं ). — ( L. 50 ) K1 D2 गतिं; K2 गतिर् ( for प° ). K1. 2 D2 मया ( for मम ). — Kumbh. ed. reads line 51 twice. — ( L. 51 ) Kumbh. ed. ( second time ) च तथैव सर्वं ( for भगवानचिन्त्यो ). — After the repetition of 51, Kumbh. ed. repeats line 48. — ( L. 52 ) V. P. यज्ञस्य ( for भागस्य ). K1 D4. 9 वार्धम् ( for चार्धम् ). K6 B6. 7. 9 Da3. a4 D5. 7 त्वथ वा ( for अथ वा ). B0. 8 Dn1. n4 D8 D2. 3. 6. 8 Kumbh. ed. ह्यर्धं तथा भागमथो तृतीयं; B. P. यज्ञस्य चेंद्रायमरैर्विचित्रं ( °भक्तं ). — MSS. om. the ref.; B. P. ब्रह्मोवाच ( for वैशंपायन उवाच ). — ( L. 53 ) K2. 6 V1 B0. 9 Da4 Ds1 D5–7 स पत्नीं; K7 स्वपत्नी; V. P. अचिंत्यः; B. P. विचिंत्य ( for स्वपत्नीं ). — ( L. 54 ) Ds1 प्रकृष्टरूपः; D5 प्रहृष्टभूतः; D7 °भीतः; V. P. B. P. पत्नीं प्रहृष्टः ( for प्रहृष्टरूपः ). D5 कुपिताम् ( for क्षुभिताम् ). — Before line 55, B. P. ins. महेश्वर उवाच. — ( L. 55 ) K1. 2. 4 V1 B6. 7. 9 Da3. a4 D4. 9 मां ( Da4 मा ) यत्सु-; K6 मां यस्त्व-; B8 ( marg ) मां सु-; D5 यां यं तु; D7 यां वत्तु; V. P. देवेशि ( for मां देवि ). K1. 2. 4. 6 B7. 8 Da3. a4 D4. 9 कुचोदरांगि ( for कृशोदराङ्गि ). — ( L. 56 ) K6 V1 B6–9 Da3. a4 D5. 7 त्वयि यन्; K7 D4. 9 त्वयि तन्; Dn1. n4 D8 D2. 3. 6. 8 वचनं ( for

किं नाम युक्तं मयि यन्मखेशे ।
अहं हि जानामि विशालनेत्रे
ध्यानेन हीना न विदन्त्यसन्तः ।
तवाद्य मोहेन च सेन्द्रदेवा
लोकास्त्रयः सर्वत एव मूढाः ।
मामध्वरे शंसितारः स्तुवन्ति
रथंतरं सामगाश्चोपगान्ति ।
मां ब्राह्मणा ब्रह्मसत्रे यजन्ते
ममाध्वर्यवः कल्पयन्ते च भागम् ।

देव्युवाच ।
सुप्राकृतोऽपि भगवन्सर्वः स्त्रीजनसंसदि ।
स्तौति गर्वायते चापि स्वमात्मानं न संशयः ।
भगवानुवाच ।
नात्मानं स्तौमि देवेशि पश्य मे तनुमध्यमे ।
यं स्रक्ष्यामि वरारोहे तवार्थे वरवर्णिनि ।
वैशंपायन उवाच ।
इत्युक्त्वा भगवान्पत्नीमुमां प्राणैरपि प्रियाम् ।
सोऽसृजद्भगवान्वक्त्राद्भूतं घोरं प्रहर्षणम् ।

मयि यन्). B8.9 मखे मे; D6 मखेशं; V. P. B. P. तवेदं (for मखेशे). — K1.2.4.6.7 V1 B6–9 Da3.a4 D4.5.7.9 transp. lines 57–58 and 59–60. — (L. 57) K2 तु; B0.8 Da3 Dn1.n4 D8 D2.3.5–7.9 Kumbh. ed. B. P. वि- (for हि). — (L. 58) K7 D4.9 ज्ञानेन (for ध्यानेन). V. P. सर्वं; B. P. सर्वे (for हीना). K2 न विचित्य; V1 न वदंति; B8 (marg.) विवदंति; V. P. हि वदंति; B. P. च विंदंति (for न विदन्ति). K2 V. P. B. P. संतः; D4 सतः; D5.7 [अ]सत्त्वाः (for [अ]सन्तः). — (L. 59) V. P. न वाद्य (for तवाद्य). B8 कोपेन (for मोहेन). K1.2 V1 B6–9 Da3.a4 D5.7 तु सेंद्र-; K7 D4.9 B. P. सहेंद्र-; V. P. महेंद्र- (for च सेन्द्र-). V. P. -देवो (for -देवा). — (L. 60) Dn4 लोकाः स्वयं (for लोकास्त्रयः). V. P. लोकत्रयं सर्वथा संप्रमूढं; B. P. लोकत्रयं सर्वमथो विनष्टं. — (L. 61) K1.2.4.7 D4.9 महाध्वरे (D4 °र-); B0 Da4 Dn1 Ds1 ममा° (for माम°). B. P. मामध्वरेशं नितरां स्तुवंति. — (L. 62) K7 B8 (marg. as above) D4.5.9 V. P. रथं( D5 °थां)-तरे (for रथंतरं). K4 D4 सामगश् (for °गाश्). K1.2.4 चोच्चरंति; K6 B7.9 D6 चोपगायंति (for °गान्ति). V1 B8 (marg.) V. P. B. P. साम गायंति गेयं (B. P. मह्यं) (for सामगाश्चोपगान्ति). — (L. 63) K1 B0.7.8 (marg.) मां ब्रह्मणा; K7 मा ब्रा°; B8 (marg. as above) गायंति मां (for मां ब्राह्मणा). B0 Dn1.n4 D8 D2.3.6.8 Kumbh. ed. ब्रह्मविदो; B7 °सूत्रेण; B8 (marg.) °मयं; B. P. °मंत्रैर् (for °सत्रे). K6.7 B6–9 Da3 D5.7 B. P. यजंति; D4.9 °तो (for यजन्ते). — (L. 64) K1 अध्वर्यवः; K2 ह्यध्व°; V1 corrupt; B8 (marg. as above) चाध्वर्यवः; D4.9 महाध्वर्यें; V. P. माध्वर्यवः (for ममाध्वर्यवः). K6 V1 B7 Da3 भागान् (for भागम्). — (L. 65) D7 सुप्राकृतोसि; V. P. अप्राकृतोपि (for सुप्राकृतोऽपि). B0.7 Dn1.n4 D8 D2.3.6.8 Kumbh. ed. पुरुषः; D5 V. P. भगवान् (for °वन्). B. P. विकत्थसे प्राकृतवत् (for the prior half). K1.2.4 B8 (marg.) Ds1 B. P. V. P. सर्वस्त्री-; B8 शर्वं स्त्री-; Dn4 सर्वत्र (for सर्वः स्त्री-). — (L. 66.) K1 स्तौमि; B. P. स्तौषि (for स्तौति). K1.2 गर्वयते; K6 B7 गर्भायते; K7 D4.9 वर्ध°; Da4 सर्वा°; V. P. गोपायते; B. P. गर्वायसे (for °यते). K6.7 Ds1 D4.9 V. P. वापि (for चापि). — (L. 67) K1.2 देवेश; K7 B0.6.7.9 D4.5.9 देवेशे (for °शि). K1.2.4 मां; V. P. त्वं (for मे). K1.2.4 वरवर्णिनि; D6 तत्सुमध्यमे; V. P. उपगच्छ च (for तनुमध्यमे). B. P. यथा त्वमनुगच्छासि (for the post. half). — (L. 68) K6 B6–8 Da3.a4 यत्स्रक्ष्यामि; K7 सिस्र°; Dn4 यं स्रक्षामि; Ds1 D4.9 B. P. संस्रक्ष्या°; D8 यं वक्ष्या° (for यं स्र°). V1 B0.8 Da3.a4 B. P. भागार्थे; B7 Dn1.n4 D8 D2.3.8 Kumbh. ed. B. P. यागार्थे; D5.7 तवाग्रे; D6 योगार्थे; V. P. भागार्थे (for तवार्थे). K1.2.4 तनुमध्यमे (for वरवर्णिनि). — MSS. om. the ref.; B. P. ब्रह्मोवाच (for वैशंपायन उवाच). — (L. 69) Da4 उक्ता (for उक्त्वा). V. P. एवमुक्त्वा तु भगवान् (for the prior half). D6 समां; V. P. पत्नीं (for उमां). K1 D2 प्रियं (for प्रियाम्). — (L. 70) K2 क्रुद्धो; K4 क्रुद्धाद्; V1 क्रोधाद् (for वक्त्राद्). K1 भूत- (for भूतं). K2.4.7 D8 D8–9 घोर- (for घोरं). K1.2 D8 D6 प्रदर्शनं; V1 प्रहर्षितं; B8 (marg. as above) D5.7 प्रधर्षणं (for प्रह°). B. P. V. P. भूतं क्रोधाग्निसंनिभं (B. P. °भवं) (for the post. half). — After line 70, Da3.a4 read line 77 for the first time, repeating it in its proper place. K1.2.4 D5.7 read line 71 twice. — (L. 71) B5–8 Da2 D3.4 क्षिप (for [आ]क्षिप). K1.2.4 D5.7 (all second time) आक्षिप त्वं मखं शीघ्रं; B. P. तमुवाच मखं गच्छ (for the prior half). K1 (both times).2.4 (both first time).7 D5.7 (last two first time).9 V. P. [इ]ह; B. P. त्वं (for [इ]ति). K1.2.4 (all first time).7 D4.5 (both times).7 (first time).9 प्रजापतेः (K1.4 °ते); D7 (second time) महाबल (for महेश्वरः). — After line 71, K7 D4.9 V. P. read line 76; while B. P. ins. after line 71:

## 29 A

After 12. 308, G1 M5 Kumbh. ed. ins :

युधिष्ठिर उवाच ।

अव्यक्तव्यक्ततत्त्वानां निश्चयं भरतर्षभ ।
वक्तुमर्हसि कौरव्य देवस्याजस्य या कृतिः ।

भीष्म उवाच ।

अत्राप्युदाहरन्तीमं संवादं गुरुशिष्ययोः ।
कपिलस्यासुरेश्चैव सर्वदुःखविमोक्षणम् ।

आसुरिरुवाच ।

अव्यक्तव्यक्ततत्त्वानां निश्चयं बुद्धिनिश्चयम् ।
भगवन्नमितप्रज्ञ वक्तुमर्हसि मेऽर्थतः ।

किं व्यक्तं किमव्यक्तं किं व्यक्ताव्यक्ततरम् । कति तत्त्वानि किमाद्यं मध्यमं च तत्त्वानां किमध्यात्ममधिभूतमधिदैवतं च । किं नु स्वर्गाप्ययं कति सर्गाः किं भूतं किं भविष्यं किं भव्यम् । किं ज्ञानं किं ज्ञेयं को ज्ञाता किं बुद्धं किमप्रतिबुद्धं किं बुध्यमानम् ।

कति पर्वाणि कति स्रोतांसि कति कर्मयोनयः । किमेकत्वं किं नानात्वम् । किं सहवासविवासं किं विद्याविद्यम् । इति ।

Colophon.

कपिल उवाच ।

यद्भवानाह किं व्यक्तं किमव्यक्तमित्यत्र ब्रूमः । अव्यक्तम् । अग्राह्यमतर्क्यमपरिमेयमव्यक्तम् । व्यक्तमुपलक्ष्यते । यथर्तवोऽमूर्तयस्तेषु पुष्पफलैर्व्यक्तिरुपलक्ष्यते तद्वदव्यक्तं गुणैरुपलक्ष्यते प्राग्गतं प्रत्यग्गतमूर्ध्वमधस्तिर्यक्च । सतश्चाननुग्राह्यत्वात्साकृतिः ।

अव्यक्तस्य तमो रजः सत्त्वं तत्प्रधानं तत्त्वं परं क्षेत्रम् । सलिलममृतमभयमव्यक्तमक्षरमजं जीवमित्येवमादीन्यव्यक्तनामानि भवन्ति । एवमाह ।

अव्यक्तं बीजधर्माणां महाग्राहमचेतनम् ।
तस्मादेकगुणो जज्ञे तद्व्यक्तं तत्त्वमीश्वरः ।

तदेतदव्यक्तम् । प्रसवधारणादानस्वभावमापो धारणे प्रजनने आदाने गुणानां प्रकृतिः सदा पराप्रमत्तं तदेकस्मिन्कार्यकारणे ।

यदप्युक्तं किं व्यक्तमित्यत्र ब्रूमः । व्यक्तं नामासुरे यत्पूर्वमव्यक्तादुत्पन्नमीश्वरमप्रतिबुद्धगुणस्थमेतत्पुरुषसंज्ञकं महदित्युक्तं बुद्धिरिति च धृतिरिति च । सत्ता स्मृतिर्मतिर्मेधा व्यवसायः समाधिः प्राप्तिरित्येवमादीनि व्यक्तपर्यायनामानि वदन्ति । एवमाह ।

महतः सिद्धिरायत्ता संशयश्च महान्यतः ।
पुत्रसर्गस्य दीप्त्यर्थमौत्सुक्यं च परं तथा ।

---

29 A

(L. 3) G1 इतिहासं पुरातनं (for the post. half). — (L. 5) G1 बुद्धिनिश्चितं (for °निश्चयम्). — (L. 7) G1 व्यक्तादव्यक्ततरं (for व्यक्ताव्यक्त°). Kumbh. ed. किमिति (for कति). — (L. 8) G1 अधिभूतमधिदैवं च; Kumbh. ed. अधिभूतदैवतं च (for अधिभूतमधिदै°). — (L. 9) G1 Kumbh. ed. भव्यं च (for भव्यम्). — (L. 10) Kumbh. ed. om. किं ज्ञेयं. Kumbh. ed. किमप्रबुद्धं (for किमप्रति°). — (L. 13) G1 Kumbh. ed. सहवासं निवासं (for सहवासवि°). M5 विद्याविद्या (for विद्याविद्यम्). — Colophon. *Adhy. name:* M5 कपिलासुरिसंवादः.

— (L. 16) G1 Kumbh. ed. मूर्तयस् (for ऽमूर्त°). G1 व्यक्तं; Kumbh. ed. व्यक्त- (for अव्यक्तं). — (L. 17) Kumbh. ed. शतश्चानुग्राह्यत्वात् (for सतश्चाननुग्रा°). — (L. 19) Kumbh. ed. व्यक्त उत्तमो (for अव्यक्तस्य तमो). Kumbh. ed. om. from परं up to अव्यक्त (in line 20). — (L. 20) G1 भयम् (for अभयम्). G1 अजं जीवदित्येवम्; Kumbh. ed. अजरमित्येवम् (for अजं जीवमित्ये°). — (L. 22) Kumbh. ed. बीजधर्मागं (for °धर्माणां). — (L. 23) G1 यस्माद् (for त°). G1 एकगुणं (for °गुणो). — (L. 24) Kumbh. ed. प्रसवाधारणादान- (for प्रसवधा°). — (L. 25) Kumbh. ed. स पराप्रमत्तं (for सदा परा°). G1 Kumbh. ed. एतस्मिन् (for एक°). — (L. 27) M5 om. यत्. Kumbh. ed. अव्यक्तम् (for व्यक्तम्). Kumbh. ed. तत्र (for अत्र). — (L. 28) G1 Kumbh. ed. उत्पन्नतत्त्वमीश्वरम् (for उत्पन्नमी°). Kumbh. ed. -संज्ञिकं (for -संज्ञकं). M5 om. महदित्युक्तं. —(L. 29) G1 मतिरित्युक्तं (for बुद्धिरिति च धृतिरिति च). Kumbh. ed. om. धृतिरिति च. G1 Kumbh. ed. धृतिर् (for मतिर्). — (L. 30) G1 Kumbh. ed. समाधि- (for समाधिः). Kumbh. ed. -पर्याये (for -पर्याय-). —(L. 32) Kumbh. ed. मम व्यक्तादुपात्ता सिद्धिरागता (sic) (for the prior half). Kumbh. ed. संयमश्च (for संशयश्च). G1 Kumbh. ed. महश्चतः (for महान्यतः). — (L. 33) Kumbh. ed. परसर्गश्च (for पुत्रसर्गस्य). — (L. 34) G1 Kumbh. ed. तदेषो( Kumbh. ed.

तदेवोर्ध्वस्रोतोमिमुखत्वादप्रतिबुद्धत्वाच्चात्मनः प्रकरोत्यहंकारमव्यक्ताव्यक्ततरम्।

यदप्युक्तं किं व्यक्ताव्यक्ततरमित्यत्र ब्रूमः। व्यक्ताव्यक्ततरं नाम तृतीयं पुरुषसंज्ञकम्।

तदेतयोरुभयोर्विरिञ्चिवैरिञ्चयोरेकैकश उत्पत्तिः। विरिञ्चोऽभिमानिन्यविवेक ईर्ष्या कामः क्रोधो लोभो दर्पो मोहो ममकारश्चेत्येतान्यहंकारपर्यायनामानि भवन्ति। एवमाह।

अहं कर्तेत्यहंकर्ता ससृजे विश्वमीश्वरः।
तृतीयमेतं पुरुषमभिमानगुणं विदुः।

अहंकाराद्युगपदुत्पादयामास पञ्च महाभूतानि शब्दस्पर्शरूपरसगन्धलक्षणानि। तान्येव बुद्ध्यन्त इति। एवमाह।

भूतसर्गमहंकाराद्यो विद्वानवबुध्यते।
सोऽभिमानमतिक्रम्य महान्तं प्रतितिष्ठते।
भूतेषु चाप्यहंकारो असरूपस्तथोच्यते।
पुनर्विषयहेत्वर्थे स मनःसंज्ञकः स्मृतः।

विखराद्वैखरं युगपदिन्द्रियैः सहोत्पादयति। श्रोत्रघ्राणचक्षुर्जिह्वात्वगित्येतानि शब्दस्पर्शरूपरसगन्धानवबुध्यन्त इति पञ्च बुद्धीन्द्रियाणि वदन्ति। एवमाहुराचार्याः। वाग्घस्तौ पादपायुरानन्दश्चेति पञ्च कर्मेन्द्रियाणि विशेषाः। आदित्योऽश्विनौ नक्षत्राणीत्येतानीन्द्रियाणां पर्यायनामानि वदन्ति। एवमाह।

अहंकारास्तथा भूतान्युत्पाद्य महदात्मनोः।
वैखरत्वं ततो ज्ञात्वा वैखरो विषयात्मकः।
विकारस्थमहंकारमवबुध्याथ मानवः।
महदैश्वर्यमाप्नोति यावदाचन्द्रतारकम्।

Colophon.

कपिल उवाच।

यदप्युक्तं कति तत्त्वानि भवन्तीति। तदेतानि मया पूर्वशः पूर्वोक्तानि। एवमाह।

तत्त्वान्येतान्यथोक्तानि यथावद्योऽनुबुध्यते।
न स पापेन लिप्येत निर्मुक्तः सर्वसंकरात्।

यदप्युक्तं किमाद्यं मध्यमं च तत्त्वानामित्यत्र ब्रूमः। एतदाद्यं मध्यमं चोक्तं बुद्ध्यादीनि त्रयोविंशतितत्त्वानि विशेषपर्यवसानानि ज्ञातव्यानि भवन्तीत्येवमाह। केनेत्यत्रोच्यते।

देवदत्तयज्ञदत्तब्राह्मणक्षत्रियवैश्यशूद्रचण्डालपुल्कसादिरेतानि ज्ञातव्यानि बुद्ध्यादीनि विशेषपर्यवसानानि मन्तव्यानि प्रत्येतव्यान्युक्तानि। एतदाद्यं मध्यमं च। एतस्मात्तत्त्वानामुत्पत्तिर्भवति अत्र प्रलीयन्ते। केचिदाहुराचार्याः। अहमित्येवमात्मकं शरीरसंघातं त्रिषु लोकेषु व्यक्तम्। अव्यक्तसूक्ष्माधिष्ठितमेतद्देवदत्तसंज्ञकम्। देहिनां योगदर्शनम्। अबुद्धपुरुषदर्शनानां तु पञ्चविंशतितत्त्वानां बुद्ध्यमानाप्रतिबुद्धयोर्व्यतिरिक्तमुपेक्षकं शुचि

---

यदेषो )र्ध्वस्रोताभिर्महत्वाद् (for तदेवोवोर्ध्वस्रोतोमिमुखत्वाद्). —(L. 35) G₁ व्यक्ताद्यक्ततरं (for अव्यक्ताव्य°). —(L. 36) Kumbh. ed. अव्यक्ततरम् (for व्यक्ताव्यक्ततरम्). —(L. 38) G₁ एकैकस्य; Kumbh. ed. एकैक (for एकैकश). —(L. 39) Kumbh. ed मदो दर्पो (for दर्पो मोहो). —(L. 40) G₁ Kumbh. ed. चैतानि (for चेत्येतानि). —(L. 42) Kumbh. ed. एनं (for एतं). —(L. 43) Kumbh. ed. उन्मादयामास (for उत्पाद°). —(L. 45) Kumbh. ed. अनुबुध्यसे (for अवबुध्यते). —(L. 46) Kumbh. ed. अभिमानम् (for सोऽभि°). —(L. 47) G₁ Kumbh. ed. अहंकारम् (for अहंकारो). G₁ असद्रूपस्; Kumbh. ed. अश्वरू° (for असरू°). —(L. 49) G₁ Kumbh. ed. श्रोत्रं घ्राणं (for श्रोत्रघ्राण-). —(L. 52) Kumbh. ed. [इं]द्रियाणि (for कर्मेन्द्रि°). Kumbh. ed. विशेषं (for °षाः). Kumbh. ed. [ऽ]श्वीनि; G₁ [ऽ]श्वीनौ (for ऽश्विनौ). —(L. 53) G₁ भवंति (for वदन्ति). —(L. 56) Kumbh. ed. राज्ञां (for ज्ञात्वा). Kumbh. ed. वेखर्यो (for वैखरो). —Colophon. *Adhy. name:* M₅ कपिलाङ्गिरिसंवादः.

G₁ om. the ref. —(L. 59) Kumbh. ed. om. इति. G₁ Kumbh. ed. तत्त्वमेतानि (for तदेतानि). G₁ मयानुपूर्वशः; Kumbh. ed. यमानुपूर्व्यशः (for मया पूर्वशः). —(L. 60) Kumbh. ed. प्रोक्तानि (for पूर्वोक्तानि). (L. 61) Kumbh. ed. तत्त्वान्यथोक्तानि (sic) (for the prior half). Kumbh. ed. तथाविद्यो (for यथावद्यो). Kumbh. ed. निबुध्यते (for ऽनुबु°). —(L. 63) Kumbh. ed इहाद्यं (for किमाद्यं). —(L 65) Kumbh. ed. ज्ञातव्यानि भवंतीत्येव मामकेनेत्यत्रोच्यते (for the line). —(L. 66) Kumbh. ed. तदेव तथथा दत्त- (for देवदत्तयज्ञदत्त-). —(L. 67) Kumbh. ed. प्रत्येतव्याभ्युक्तानि (sic) (for °तव्यान्युक्तानि). —(L. 69) G₁ Kumbh. ed. एतदात्मकं (for एवमात्मकं). —(L. 70) G₁ सशरीरसंघातं; Kumbh. ed. स शीरसं° (for शरीरसं°). Kumbh. ed. om. सूक्ष्म. —(L. 71) Kumbh. ed. om. देहिनां. G₁ Kumbh. ed. योगदशम- (for °दर्शनम्). G₁ Kumbh. ed. om. अबुद्ध. —(L. 72) Kumbh. ed. प्रतिबुध्यमानयोर् (for बुद्ध्यमानाप्रतिबुद्धयोर्). Kumbh. ed. om. उपेक्षकं. —(L. 75) Kumbh. ed. [ऽ]प्यव्यक्तम् (by transp.). G₁ Kumbh.

व्यग्रमित्याहुराचार्याः । एवं चाह ।

चतुर्विंशतितत्त्वज्ञस्त्वव्यक्ते प्रतितिष्ठति ।
पञ्चविंशतितत्त्वज्ञोऽव्यक्तमप्यतितिष्ठति ।

Colophon.

## 29 B

$G_7$ $M_5$ cont.:

कपिल उवाच ।

यदप्युक्तं किमध्यात्ममधिभूतमधिदैवतं चेत्यत्र ब्रूमः । अध्यात्ममधिभूतमधिदैवतं चासुरे वक्ष्यामः । पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतम् । पायुरध्यात्मं विसर्गोऽधिभूतं मित्रोऽधिदैवतम् । आनन्दोऽध्यात्ममनुभवोऽधिभूतं प्रजापतिरधिदैवतम् । हस्तावध्यात्मं कर्तव्यमधिभूतमिन्द्रोऽधिदैवतम् । वागध्यात्मं वक्तव्यमधिभूतमग्निरधिदैवतम् । घ्राणोऽध्यात्मं घ्रेयमधिभूतं भूमिरधिदैवतम् । श्रोत्रमध्यात्मं श्रोतव्यमधिभूतमाकाशमधिदैवतम् । चक्षुरध्यात्मं द्रष्टव्यमधिभूतं सूर्योऽधिदैवतम् । जिह्वाध्यात्मं रसोऽधिभूतमापोऽधिदैवतम् । त्वगध्यात्मं स्प्रष्टव्यमधिभूतं वायुरधिदैवतम् । मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधिदैवतम् । अहंकारोऽध्यात्ममभिमानोऽधिभूतं विरिञ्चोऽधिदैवतम् । बुद्धिरध्यात्मं बोद्धव्यमधिभूतं पुरुषोऽधिदैवतम् । एतावदध्यात्ममधिभूतमधिदैवतं च सर्वत्र प्रत्येतव्यानीत्याह ।

ब्राह्मणे नृपतौ कीटे श्वपाके शुनि हस्तिनि ।
पुत्तिकादंशमशके विहंगे च समं भवेत् ।
अव्यक्तपुरुषयोर्योगाद्बुद्धिरुत्पद्यतेऽऽत्मनि ।
यया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम् ।
य एतत्त्रितयं वेत्ति शुद्धं चान्यदुपेक्षकम् ।
विरजो वितमस्कं च निर्मलं शिवमव्ययम् ।
संदेहसंकरान्मुक्तो निरिन्द्रियमनीश्वरम् ।
निरङ्कुरमबीजं च शाश्वतं तदवाप्नुयात् ।

यदप्युक्तं किं नु सर्गाप्ययमिति अत्र ब्रूमः । तद्यथा जरायुजाण्डजस्वेदजोद्भिज्जाश्चत्वारो भूतग्रामाः कालाग्निनाहंकृतेनानेकशतसहस्रांशुना दह्यमानाः पृथिवीमनुप्रलीयन्ते । तदा-त्तगन्धा कूर्मपृष्ठनिभा पृथिवी अप्सु प्रलीयते । तदुदकं सर्वमभवत् । अग्निरप्यादत्ते तोयम् । तदाग्निभूतमभवत् । अग्निमप्यादत्ते वायुः । स वायुरूर्ध्वमधस्तिर्यक्च दोधवीति । तद्वायुभूतमभवत् । वायुमप्यादत्ते व्योम । तदाकाशमेव निनादमभवत् । तदाकाशं मनसि प्रलीयते । मनोऽहंकारेऽहंकारो महति महानव्यक्ते तदेतत्प्रलयमीहते । प्रलयान्तान्महाप्रलय इत्युच्यते । प्रणष्टसर्वस्वं तम एवाप्रतिमं भवति । अग्राह्यमच्छेद्यमभेद्यमप्रतर्क्यमनाद्यचिन्त्यमनालम्बमस्थानमव्ययमजं शाश्वतमिति । एवमाह ।

सर्गप्रलयमेतावत्तत्त्वतो योऽवबुध्यते ।
उत्तीर्य सोऽशिवादस्माच्छिवमानन्त्यमाप्नुयात् ।

इति ।

Colophon.

कपिल उवाच ।

यदप्युक्तमासुरे कति सर्गाणि प्राकृतवैकृतानि भवन्तीति । अत्र ब्रूमः । नव सर्गाणि प्राकृतवैकृतानि भवन्ति । अव्यक्तान्महदुत्पद्यते । तं विद्यासर्गं वदन्ति । महतश्चाहंकार उत्पद्यते । अहंकारात्पञ्चभूतसर्गः । भूतेभ्यो विकारः । यस्मात्कृत्स्नस्य जगतस्तेजस्तदेतत्प्रभवाप्ययम् । एवमाह ।

उत्पत्तिं निधनं मध्यं भूतानामात्मनश्च यः ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ।

यदप्युक्तं किं भूतं किं भव्यं किं भविष्यच्चेत्यत्र ब्रूमः । भूतं भव्यं भविष्यं चासुरे त्रैलोक्यं कालः । स महात्मा संप्रत्यतीतानागतानामुत्पादकानामुत्पादकश्चानुग्राहकश्च तिरोभावकश्चेत्येवमाह ।

---

ed. अधितिष्ठति ( for अतिति° ). — Colophon. *Adhy. name:* $M_5$ कपिलासुरिसंवादः.

29 B

$G_7$ om. the ref. — ( L. 1 ) $G_7$ इति अत्र ( for चेत्यत्र ). — ( L. 3 ) $G_7$ विसर्गम् ( for विसर्गो ). — ( L. 6 ) $G_7$ सूर्यो ( for अग्निर् ). — ( L. 10 ) $G_7$ स्पृष्टम् ( for स्प्रष्टव्यम् ). — ( L. 14 ) $G_7$ om. त्याह. — ( L. 16 ) $G_7$ पुत्रिका° ( for पुत्तिका- ). — ( L. 25 ) $G_7$ om. शत. — ( L. 31 ) $G_7$ प्रलीयते ( for प्रलयमीहते ). — ( L. 32 ) $M_5$ प्रनष्ट- ( for प्रणष्ट- ). $G_7$ -सर्वस्वस् ( for °स्वं ). — ( L. 33 ) $G_7$ अनादिमचिंत्यमनालंब्यम् ( for °द्यचिन्त्यमनालम्बम् ). — ( L. 36 ) $G_7$ अश्नुते ( for आप्नुयात् ). — ( L. 37 ) $G_7$ om. इति. — Colophon. *Adhy. name:* $M_5$ कपिलासुरिसंवादः.

$G_7$ om. the ref. — ( L. 42 ) $G_7$ तम् ( for तद् ). $G_7$ आहुः ( for आह ). — ( L. 44 ) $G_7$ विद्याविद्ये च यो वेत्ति ( for the prior half ). — ( L. 46 ) $G_7$ संप्रतीतानागतानाम् ( for संप्रत्यतीताना° ). — ( L. 47 ) $G_7$ उत्पादकं

भूतभव्यभविष्याणां स्रष्टारं कालमीश्वरम् ।
योऽवबुध्यति तद्गामी स दुःखात्परिमुच्यते ।

कतरस्माद्दुःखात् । जन्मजरामरणाज्ञानबधिरान्धकुब्जहीनातिरिक्ताङ्गवधबन्धवैरूप्यचिन्ताव्याधिप्रभृतिभिरन्यैश्चानेकैरिति ।

Colophon.

कपिल उवाच ।

यदप्युक्तं किं ज्ञानमिति अत्र ब्रूमः । ज्ञानं नामासुरे प्रज्ञा । सा बुद्धिर्यया बोद्धव्यमनुबुध्यते । किं पुनस्तद्बोद्धव्यमित्यत्रोच्यते । बोद्धव्यं नाम द्विविधमिष्टानिष्टकृतम् । तद्यथा । इदं धर्म्यमिदमधर्म्यम् । इदं वाच्यमिदमवाच्यम् । इदं कार्यमिदमकार्यम् । इदं ग्राह्यमिदमग्राह्यम् । इदं गम्यमिदमगम्यम् । इदं श्राव्यमिदमश्राव्यम् । इदं दृश्यमिदमदृश्यम् । इदं भक्ष्यमिदमभक्ष्यम् । इदं भोज्यमिदमभोज्यम् । इदं पेयमिदमपेयम् । इदं लेह्यमिदमलेह्यम् । इदं चोष्यमिदमचोष्यम् ।

कुतश्चैतान्यवतिष्ठन्ते । क्व वा प्रलीयन्ते । कस्य वैतानि । कस्य वा नैतानि । तत्रोच्यते । अव्यक्तादेतान्यवतिष्ठन्ते । अव्यक्तमेव प्रलीयन्ते । अव्यक्तस्यैतानि नैतानि पुरुषस्येत्यत्राह । यद्यव्यक्तादेतान्यवतिष्ठन्तेऽव्यक्तमेवाभिप्रलीयन्ते ।

केन खल्विदानीं कारणेनेष्टानिष्टकृतैर्द्वंद्वैरवबुध्यते क्षेत्रज्ञः । कस्मादभिमन्यते ममैतानि द्वंद्वानि । अहमेतेषां मत्तश्चैतान्यवतिष्ठन्ते मय्येवाभिप्रलीयन्त इत्येवमाह ।

प्रवर्तमानान्प्रकृतेरिमान्गुणां-
स्तमोवृतोऽयं विपरीतदर्शनः ।
अहं करोमीत्यबुधोऽभिमन्यते
तृणस्य कुब्जीकरणेऽप्यनीश्वरः ।

यदा स्वयमभिमन्यते । अव्यक्तादेतान्यवतिष्ठन्ते । अव्यक्तमेवाभिप्रलीयन्ते । अव्यक्तस्यैतानि नैतानि ममेति । तदास्य विज्ञानाभिसंबन्धाद्विवासो भवति । एवमाह ।

सेतुरिव भवेत्प्रकृतिर्जलमिव गुणा मत्स्यवत्क्षेत्री ।
तस्मिन्स्वभावलुलिते जले प्रवृत्ते चरति मत्स्यः ।

एवं स्वभावयोगात्सृजति गुणान्प्रकृतिरित्यभिमतम् । न सोऽज्ञेषु प्रविचरति क्षेत्रज्ञो ज्ञः परः प्रकृतेरिति ।

यदप्युक्तं किं ज्ञेयमिति । अत्र ब्रूमः । ज्ञेयं नामासुरे पुरुषः पञ्चविंशतितत्त्वानि भवन्ति एवमाह ।

अव्यक्तं बुद्ध्यहंकारौ महाभूतानि पञ्च च ।
विशेषान्पञ्च चैवाहुर्दशैकं च प्रकाशकान् ।
एकादशेन्द्रियाण्येव एतावज्ज्ञेयसंज्ञितम् ।
पञ्च पञ्च हि वर्गाणि विज्ञेयान्येव तत्त्वतः ।
पञ्चविंशतितत्त्वानि विदित्वैतानि तत्त्वतः ।
विशुद्धः पुरुषश्चास्माद्वर्गहीनो न शोचति ।
पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः ।
त्रयस्त्रिवर्गान्यो वेद शुद्धात्मनि स लीयते ।

के ते त्रयस्त्रिवर्गा इत्यत्र ब्रूमः । सत्त्वं रजस्तम इति प्रथमः । उत्पादकोऽनुग्राह्यकस्तिरोभावक इति द्वितीयः । बुद्धोऽप्रतिबुद्धो बुध्यमान इति तृतीयः । एवमेते त्रयस्त्रिवर्गा भवन्ति । एवमाह ।

त्रयस्त्रिवर्गान्विज्ञाय याथातथ्येन मानवः ।
कर्मणा मनसा वाचा प्रविमुक्तो न शोचति ।

कार्यं कारणं कर्तृत्वमिति त्रिवर्गगुणाः । के गुणा गुणमात्रा गुणलक्षणं गुणावयवम् । सत्त्वं रजस्तम इति गुणाः । तत्र तत्त्वदर्शनता भयनाशः स्वस्थभावता प्रसन्नेन्द्रियता सुखस्वप्नप्रतिबोधनमिति सत्त्वमात्राः । रागिता मत्सरिता साहसिकता

(for °दकश्). —(L. 51) G7 °हीनातिरिक्तांगावयवबंध° (for °क्ताङ्गवधबन्ध°). —Colophon. *Adhy. name:* M6 कपिलासुरिसंवादः.

G7 om. the ref. —(L. 58) G7 om. इदं दृश्यमिदमदृश्यम्. G7 किं भक्ष्यं किमभक्ष्यं (for इदं भक्ष्यमिदमभक्ष्यम्). —(L. 60) After अचोष्यम्, G7 ins. इदं. —(L. 62) G7 तत्र च्यवते (for तत्रोच्यते). —(L. 63) G7 [अ]भिप्रलीयंते (for प्रलीयन्ते). G7 क्षेत्रज्ञस्य (for अव्यक्तस्य). G7 om. from तानि up to अभिप्रलीयन्ते (in line 64). —(L. 65) G7 केनेदानीं (for केन खल्विदानीं). —(L. 66) G7 ममैवैतानि (for ममैतानि). —(L. 70) G7 [ऽ]वमन्यते (for ऽभि°). —(L. 74) After विवासो, G7 ins. [ऽ]ज्ञात्सृजति गुणान्. —(L. 75) G7 क्षेत्रि (for क्षेत्री). —(L. 77) G7 प्रकृतिगुणान् (for सृजति गु°). G7 नासौ ज्ञेषु (for न सोऽज्ञेषु). —(L. 81) G7 बुद्ध्यहंकारे (for बुद्ध्यहंकारौ). —(L. 82) G7 प्रयोजकान् (for प्रकाश°). —(L. 84) G7 एवमादधुः (for एव तत्त्वतः). —(L. 85) G7 पंचविंशतितत्त्वतः (for the post. half). —(L. 86) M6 यत्र यत्राश्रमे (for यत्र तत्रा°). —(L. 90) G7 उत्पाद्यको (for °दको). —(L. 95) G7 वर्गगुणाः (for त्रिवर्ग°). —(L. 98) G7 °प्रतिबोधनेति (for °धनमिति). M6 साहसिता (for साहसिकता). —(L. 99) G7 अलसता (for मूढता).

परितापितारिष्टस्वमप्रतिबोधनतेति रजोमात्राः । मूढता निद्रावेशिता धर्मद्वेषिताकार्येष्वतिप्रमोदिता स्मृतिनाशश्चेति तमोमात्राः । गुणवृत्तमित्युपास्य सर्वभूतमध्यस्थस्तमसाभिभूतः स्वपिति । सत्त्वविशुद्धोऽवबुध्यते । स्वप्नप्रतिबोधनान्तरं रज इत्यवयवान् । य एवं विन्दते प्राज्ञः सर्वतो विमुच्यत इति ।

Colophon.

कपिल उवाच ।

यदप्युक्तं को ज्ञातेति अत्र ब्रूमः । ज्ञाता नामासुरे क्षेत्रज्ञो द्रष्टा शुचिरुपेक्षको ज्ञानत्रिको बुध्यमानाप्रतिबुद्धयोः परः । तं विदित्वा निरवयवमनामयमस्माद्दुःखाद्विमुच्यत इत्येवमाह ।

पञ्चविंशतितत्त्वाढ्यं निष्कलं शुचिमव्रणम् ।
न शोचति नरो ज्ञात्वा सांख्यश्रुतिनिदर्शनात् ।

यदप्युक्तं किमप्रतिबुद्धं किं बुध्यमानं चेति । अत्र ब्रूमः । अप्रतिबुद्धं नामासुरे अव्यक्तम् । बुध्यमानं बुद्धिस्थम् । परमेताभ्यामन्यदुपेक्षकं शुचिज्ञं व्यग्रमित्येवमाह ।

बुध्यमानाप्रतिबुद्धाभ्यां बुद्धस्य च निरात्मनः ।
पारावर्यं विदित्वा तु ज्ञानसाफल्यमाप्नुयात् ।
ये त्वेवं नाम बुध्येरन्यथाशास्त्रनिदर्शनात् ।
त्रितयं तेष्वसाफल्यं शास्त्रस्याभवदासुरे ।

Colophon.

कपिल उवाच ।

यदप्युक्तं कति पर्वाणि भवन्तीति अत्रोच्यते । पञ्च पर्वाणि तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति । तम इत्यज्ञानमेवाधिकुरुते । मोह इत्यालस्यमेवाधिकुरुते । महामोह इति काममेवाधिकुरुते । कस्मात् । महतामप्यत्र देवदानवमहर्षीणां महान्मोहो भवतीति । तामिस्र इति क्रोधमेवाधिकुरुते । अन्धतामिस्र इति विषादमेवाधिकुरुते । विषादश्च मृत्युः । स चाप्रतिबुद्धस्य भवति । कस्मात् । यन्मत्त्वस्थोऽहमिति पश्यन्मोहात्स सत्त्वविनाशे नित्यस्य क्षेत्रज्ञस्य विनाशमनुपश्यति । यत्रैककालमन्धतामिस्रं विषादमेवाछेति । अहं मरिष्यामि अहममृतोऽनित्यत्वादज्ञानत्वाच्च । मरणजननत्वे स्वशरीरसंस्थिते परशरीरसंज्ञिते चाभिष्वजते । अहं तव मम त्वं माता मम मातुरहं पुत्रो मम पितुरहमित्येवमादिषु स्नेहायतनेष्वभिधत्ते । सततं दुःखानुबद्धस्तासु तासु योन्यवस्थास्वभिषिच्यमानो मम सुखं मम दुःखमित्येवमादिभिः सर्वद्वंद्वैरभ्याहतोऽहंकारस्पृष्टो मात्सर्यकामक्रोधलोभमोहमानदर्पमदाविष्टस्तृष्णार्तश्च । इन्द्रियानुकूलतोऽतिकृच्छ्रत्वाच्चियतमानसः शुभाशुभमेव कर्म कुर्वन्स्थावरनिरयतिर्यग्योनिष्वेवोपपद्यते वर्षसहस्रकोटिशतान्यनन्तान्येकोऽनवबोधात् । एवं ह्याह ।

पर्वाणि पर्वाणि घोराणि योऽविद्वान्नावबुध्यते ।
स बध्यते मृत्युपाशैर्हर्षशोकसमन्वितः ।
बुध्यमानो ह्यदीनात्मा विदितार्थस्तु तत्त्वतः ।
विमुच्यते मृत्युपाशैर्विद्यया गतनिश्चयः ।

इति ।

यदप्युक्तं कति स्रोतांसि भवन्तीति । अत्र ब्रूमः । पञ्च स्रोतांसि भवन्ति । मुख्यस्रोतस्तिर्यक्स्रोत उर्ध्वस्रोतोऽर्वाक्स्रोतोऽनुग्रहस्रोतश्चेति ।

Colophon.

---

— (L. 100) G7 [अ]प्रमादता (for [अ]तिप्रमोदिता). — (L. 101) G7 [अ]पास्य (for [उ]पास्य). — (L. 102) G7 स्वपितृ- (for स्वपिति). M5 सुप्त- (for स्वप्न-). — Colophon: *Adhy. name*: M5 कपिलासुरिसंवादः.

— (L. 105) G7 ज्ञानात्मको (for ज्ञानत्रिको). — (L. 106) G7 परं (for परः). G7 om. (hapl.) मनामय. — (L. 108) G7 -तत्त्वाद्रि- (for -तत्त्वाढ्यं). — (L. 109) G7 न शोचति वेदश्रुतिनिदर्शनात्. — (L. 112) G7 शुद्धज्ञं (for शुचिज्ञं). — (L. 116) G7 शास्त्राभावादथासुरे (for the post. half). — Colophon: *Adhy. name*: M5 कपिलासुरिसंवादः.

— (L. 117) G7 om. पञ्च पर्वाणि. — (L. 124) G7 यत्रैकालयम् (for यत्रैककालम्). — (L 126) G7 मर्त्यो (for अमृतो). G7 -संज्ञिते (for -संस्थिते). — (L. 127) G7 om. (hapl.) परशरीरसंज्ञिते. — (L. 128) G7 पितुरित्येवमादिषु (for पितुरहमित्येव°). — (L. 129) G7 दुःखानुद्वंद्वस् (for °बद्धस्). G7 [अ]भिनिविष्यमाणो (for [अ]भिषिच्यमानो). G7 मम सुखदुःखम् (for मम सुखं मम दुःखम्). — (L. 132) G7 [ऽ]कृत्वा (for ऽतिकृच्छ्रत्वान्). G7 om. कुर्वन्. — (L. 133) G7 [अ]वपद्यते (for [ए]वोपपद्यते). — (L. 134) G7 ह्याहुः (for ह्याह). — (L. 135) G7 अवपद्यते (for नावबुध्यते). — (L. 136) G7 बध्यते मृत्युपाशैश्च (for the prior half). — Colophon: *Adhy. name*: M5 कपिलासुरिसंवादः.

कपिल उवाच ।

यदप्युक्तं कति कर्मयोनयो भवन्तीति । अत्र ब्रूमः । पञ्च कर्मयोनयो भवन्ति धृतिः श्रद्धा सुखा विविदिषाविविदिषा चेति । तत्र धृतिर्नाम कर्मयोनिः । धृतिं योऽनुरक्षति त्रिविधेन कर्मणा वाङ्मनःकायसमुत्थेनेति । एवमाह ।

वाचि कर्मणि संकल्पे प्रतिज्ञां योऽनुरक्षति ।
तन्निष्ठस्तत्प्रतिज्ञश्च धृतेरेतत्स्वलक्षणम् ।

श्रद्धा नाम कर्मयोनिः । श्रद्धां यस्त्वनुतिष्ठते सोऽनसूयादमादिभिः विज्ञानसंयोगब्रह्मचर्यगुरुकुलनिवासगृहस्थवानप्रस्थदानाध्ययनप्रतिग्रहमन्त्रादिभिर्नक्षत्रनियमैः श्रेयः प्राप्स्यामीत्येवमनुष्ठानं कुरुत इति । एवमाह ।

ब्रह्मचर्यानसूये च दानमध्ययनं तपः ।
यजनं याजनं चैव श्रद्धाया लक्षणं स्मृतम् ।

सुखं नाम कर्मयोनिः । यः सुखकामो भवति प्रायश्चित्तपरः परेण यत्नेनानुतिष्ठति । तद्यथा सत्यं काममन्युविषयगोब्राह्मणकर्म । अनुलोमानामपि प्रोक्ता सावित्रीत्यन्याश्च विद्या बह्वयो ब्रह्मलोकं प्रापयन्तीति । एवमाह ।

कर्मविद्यातपोभिस्तु यो यत्नमनुतिष्ठति ।
प्रायश्चित्तं तपश्चैव तत्सुखायास्तु लक्षणम् ।

विविदिषा नाम कर्मयोनिः । सर्वं ज्ञातुकामता । आगमांश्च कुरुते श्रुतिविशेषाकाङ्क्षी क संज्ञा क वासंज्ञेति । एवमाह ।

सर्वमेतत्परिज्ञाय कर्म ह्यारभते तु यः ।
सैषा विविदिषा नाम कर्मयोनिरनुष्ठिता ।

अविविदिषा नाम कर्मयोनिः । सर्वमेवाज्ञातुकामता सर्वकर्मभ्यो निवर्तनमिति । एवमाह ।

सर्वमेतत्परिज्ञाय कर्मभ्यो यो निवर्तते ।
सैषाविविदिषा नाम कर्मयोनिरनुष्ठिता ।

यदप्युक्तं किमेकत्वं किं नानात्वमिति । अत्र ब्रूमः । एकत्वं नामासुरे यदयं सत्त्वमभिष्वजते क्षेत्रज्ञः व्यक्तं चाव्यक्तं चाप्रतिबुद्धत्वात्तदेकत्वमपदिश्यते । नानात्वं नाम यदयं सत्त्वादव्यक्ताच्च स्मृतः समावर्तयते । एतन्नानात्वमपदिश्यते प्रतिबुद्धत्वात् । एवमेषां भौतिकाहंकारिकमाहात्मिकाव्यक्तीनां चतुर्णां पुरुषाणां सत्त्वेनैकत्वं भवति नानात्वं चेति । एवमाह ।

नानात्वैकत्वमेतावद्यो न विन्दत्यबुद्धिमान् ।
स बध्यते सर्वबन्धैरसंबन्धाद्विमुच्यते ।

यदप्युक्तं किं सहवासविवासमिति । अत्र ब्रूमः । सहवासं नामासुरे यदयं सत्त्वमभिषजते क्षेत्रज्ञोऽव्यक्तं चाप्रतिबुद्धत्वादेतत्सहवासमित्यपदिश्यते । विवासं नाम यदयं सत्त्वादव्यक्ताच्च वासं प्रतिसमावर्तयते प्रतिबुद्धत्वादेतद्विवासमपदिश्यते । एवमप्रतिबुद्धानां विषयाभिषङ्गिणामेषां भौतिकाहंकारिकमाहात्मिकाव्यक्तिकानां चतुर्णां पुरुषाणां सत्त्वेन सहवासविवासमन्यत्वात् । एवं चाह ।

विवासं सहवासं च यो विद्वान्नावबुध्यते ।
स बद्धः सत्त्वसंवासैः संसारान्न प्रमुच्यते ।

इति ।

Colophon.

कपिल उवाच ।

यदप्युक्तं किं विद्याविद्येति । अत्र ब्रूमः । अविद्या नामासुरे भवत्येषा इष्टानिष्टाव्यतिरिक्ता त्रयी पुनर्भाविकी । विद्या नामासुरे भवतीष्टानिष्टव्यतिरिक्तान्वीक्षिक्यपुनर्भाविकी । सर्वभूताभयंकरी सर्वलोकेष्वालोकनाय सर्वज्ञानावबोधनाभ्युद्यता

—(L. 145) G7 न रक्षति (for ऽनुर°). —(L. 146) G7 वाङ्मनससमुत्थानेन (for °मनःकायसमुत्थेन). —(L. 147) G7 न रक्षति (for ऽनुर°). —(L. 148) G7 धृतेरेतस्य (for °रेतत्स्व-). —(L. 149) G7 त्वधितिष्ठेत् (for त्वनुतिष्ठते). —(L. 150) G7 विशेयानां संगयोग- (for विज्ञानसंयोग-). G7 -कुलवास- (for -कुलनि°). —(L. 155) M5 सुखा (for सुखं). —(L. 158) G7 प्राप्नुवंति (for प्रापयन्ति). —(L. 162) G7 -विशेषकांक्षित्वसंज्ञात्वसंज्ञेति (for -विशेषाकाङ्क्षी क संज्ञा). —(L. 163) M5 कर्मभ्यो यो निवर्तते (for the post. half). —(L. 166) G7 om. सर्वं. —(L. 168) G7 स्वनुष्ठिता (for अनु°). —(L. 170) G7 व्यक्तश्चाव्यक्तश्च् (for व्यक्तं चाव्यक्तं). —(L. 171) G7 एकत्वम् (for तदेकत्वम्). —(L. 172) G7 स्मृत्या (for स्मृतः). M5 प्रकृतिबुद्धत्वाद् (for प्रतिबु°). —(L. 173) G7 आत्मिकाव्यक्तीकानां (for °व्यक्तीनां). —(L. 177) G7 om. किं. —(L 179) After सहवासम्, M5 om. इति. M5 व्यक्ताच् (for अव्य°). —(L. 181) G7 एष स प्रतिबुद्धविषयस्त्वभि- (for एवमप्रतिबुद्धानां विषयाभि-). —(L. 182) G7 om. सत्त्वेन. —(L. 186) G7 om. इति. —Colophon. *Adhy. name*: M5 कपिलासुरिसंवादः.

—(L. 188) इष्टानिष्टव्यातिरिक्ता (for °निष्टाव्यतिरिक्ता). —(L. 190) G7 सर्वभूतेष्वालोकनामय- (for °लोकेष्वालोकनाय). G7 -ज्ञानावबोधनाध्यात्मना (for °भ्युद्यता). —(L. 191) G7 [आ]चार्याभिगम- (for °यैमभिमम्य).

सर्वदुःखनिर्मोक्षायोपदिष्टेत्याचार्यमभिगम्य याथातथ्यदर्शनाच्च भवति । एवमाह ।

ऊर्ध्वं चावाक्च तिर्यक्च न क्वचित्कामयेद्बुधः ।
न हि ज्ञानेन चाज्ञाने शर्म विन्दति मानुषः ।
मानुषत्वाच्च देवत्वं देवत्वाच्च मनुष्यताम् ।
स तु संधावतेऽजस्रमविद्यावशमागतः ।
यस्त्वविद्यामधःकृत्वा विद्यार्थमवबुध्य च ।
नाभिनन्दति न द्वेष्टि विद्याविद्ये स बुद्धिमान् ।
पारावर्ये सुखं ज्ञात्वा विदित्वा च परं बुधः ।
मुच्यते देहसंतानाद्देहाच्चामृतमाप्नुयात् ।

इति ।

Colophon.

आसुरिरुवाच ।

भगवन्किं कुशलाकुशलं वर्गावर्गं किं कृत्स्नक्षयं किं शुद्धाशुद्धं किं नित्यानित्यं किं केवलाकेवलं किं परात्परं किं पश्यापश्यं किं शाश्वताशाश्वतं किं व्यतिरिक्ताव्यतिरिक्तं किं योगायोगमित्यत्र संदेहो मे भवत्यप्रत्यक्षत्वात् । प्रत्यक्षं चैतद्भगवतः । तदनुभाषितुमर्हति भगवान्मदनुग्रहाय धर्मेण । इति ।

कपिल उवाच ।

यदुक्तमासुरे किं कुशलाकुशलमिति । अत्र ब्रूमः । कुशलं नाम सर्वेषु वेदेषु सर्वेषु शास्त्रेषु सर्वासु विद्यास्वधिगतयाथातथ्यत्वम् । अकुशलं नाम सर्वेषामनधिगतयाथातथ्यत्वम् । तदेतत्कुशलाकुशलं कर्म सत्त्वमाहुः । सत्त्वमूले खल्वेते कुशलाकुशले सत्त्वभूते सत्त्व एव प्रलयं गच्छतः । सत्त्वं चैवाविशेषस्त्यजति । तन्मूलं चैतत्कुशलाकुशलमशेषतः सत्त्वमिति । एवमाह ।

कायेन त्रिविधं कर्म वाचा चैव चतुर्विधम् ।
मनसा त्रिविधं चैव कुशलाकुशलं स्मृतम् ।

यदप्युक्तं किं वर्गावर्गमिति । अत्र ब्रूमः । वर्गं नामासुरे पुरुषः पञ्चविंशतितत्त्वानि भवन्ति । अव्यक्तं महानहंकारः पञ्च महाभूतानि पञ्च विशेषा एकादशेन्द्रियाणि । तद्वर्गम् । एतस्माद्वर्गादपवर्ग उपवृत्तः क्षेत्रज्ञः शुचिरुपेक्षको बुध्यमानाप्रतिबुद्धयोः परस्तात् । एवमाह ।

पञ्चविंशात्परं व्यक्तमहंकारस्ततः परः ।
अहंकारात्परा बुद्धिर्बुद्धेरात्मा महान्परः ।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
परावरज्ञस्तत्त्वानां प्राप्नोत्यजमनुत्तमम् ।

इति ।

Colophon.

कपिल उवाच ।

यदप्युक्तं किं कृत्स्नक्षयमिति । अत्र ब्रूमः । कृत्स्नक्षयं नामासुरे पुरुषः पञ्चविंशतितत्त्वानि भवन्ति । अव्यक्तं महान्बुद्धिरहंकारः पञ्च महाभूतानि पञ्च विशेषा एकादशेन्द्रियाणि पुरुषेण ज्ञानव्यानि भवन्ति । स्वतस्तस्मात्तत्त्वानि । नाहमेतेषां नैतानि मत्तः सर्वतः सर्वागीति । एवमाह ।

सम्यग्दर्शनसंपन्नः कृत्स्नक्षयमवाप्नुयात् ।
कृत्स्नक्षयं न चाप्नोति असम्यग्दर्शने रतः ।

यदप्युक्तं किं शुद्धाशुद्धमिति । अत्र ब्रूमः । शुद्धं नामासुरे क्षेत्रज्ञो द्रष्टा साक्षिमात्रको बुध्यमानाप्रतिबुद्धयोः परो यः पञ्चविंशतितत्त्वज्ञः । यथा मन्तव्यं तथा मन्यते यथा बोद्धव्यं तथा बुध्यते यथा वक्तव्यं तथा ब्रवीति यथा कर्तव्यं तथा करोत्यहंकाराप्रतिबुद्धत्वात् । बुधेन क्षेत्रज्ञेन सर्वं दृष्टं सर्वागमाः सर्वद्वंद्वानि सर्वज्ञानानि तपश्चातपश्च शुद्धश्चाशुद्धश्च । अनेन मार्गेण क्षेत्रज्ञस्याशुद्धधर्मिणः शुद्धिमृच्छति । अमार्गेण ज्ञानदृष्टान्तागमप्रामाण्यात्सुविपुलमपि तपस्तप्त्वा संसार एव मज्जत्यप्रतिबुद्धत्वात् । एवमाह ।

— (L. 192) G1 शोचति (for भवति). — (L. 194) G1 चाज्ञानेन (hypermetric) (for चाज्ञाने). M5 मानुषं (for मानुषः). — (L. 201) G1 om. इति. — Colophon. *Adhy. name:* M5 कपिलासुरिसंवादः.

M5 om. the ref. — (L. 202) G1 om. the first किं. G1 कृत्स्नं (for कृत्स्नक्षयं). — (L. 203) G1 om. (hapl.) किं नित्यानित्यं. — (L. 205) After अप्रत्यक्षत्वात्, G1 ins. च. G1 भवति (for भगवतः). — (L. 207) M5 कुशलाकुशलत्वम् (for °शलम्). — (L. 210) G1 कुशलं (for कुशलाकुशलं). — (L. 211) G1 लयं (for प्रलयं). — (L. 219) G1 अवर्ग उपवृत्तिः (for अपवर्ग उपवृत्तः). — (L. 220) G1 परस्तस्मात् (for परस्तात्). — (L. 221) G1 पराव्यक्तम् (for परं व्यक्तम्). G1 ततोपरः (for ततः परः). — (L. 225) G1 om. इति. — Colophon. *Adhy. name:* M5 कपिलासुरिसंवादः.

(L. 228) G1 भूतानि (for महाभू°). — (L. 229) G1 om. तस्मा. — (L. 233) G1 om. किं. — (L. 234) G1 परः (for परो यः). — (L. 239) G1 क्षेत्रस्य (for क्षेत्रज्ञस्य). G1 शुद्धम् (for शुद्धिम्). G1 ऋच्छति धर्मेण (for ऋच्छति । अमार्गेण). — (L. 241) G1 [अ]प्रति-

सुशुद्धं पुरुषं दृष्ट्वाप्यशुद्धमिति मन्यते ।
स तपो विपुलं प्राप्य संसारे प्रतितिष्ठति ।

इति ।

Colophon.

कपिल उवाच ।

यदप्युक्तं किं नित्यानित्यमिति । अत्र ब्रूमः । नित्यं नामासुरेऽव्यक्तम् । अनित्या विकाराः । अव्यक्तमनित्यं प्रवदन्ति सर्गप्रलयधर्मित्वाद्विकाराणाम् । तथैवाधिष्ठातारमनित्यं प्रवदन्ति अधिष्ठानकर्तृत्वाद्विकाराणाम् । अनेनैव हेतुना एवमेतयोरुभयोर्नित्यत्वान्नित्यः क्षेत्रज्ञ इत्येवमाह ।

बुध्यमानाप्रतिबुद्धाभ्यां बुद्धस्य च निरात्मनः ।
नित्यानित्यं विदित्वा तु न जन्म पुनराप्नुयात् ।

यदप्युक्तं किं केवलाकेवलमिति । अत्र ब्रूमः । केवलं नामासुरे परं क्षेत्रज्ञोऽप्रकृतिरविकारः । प्रकृतिविकारगुणाधिष्ठितत्वादकेवलं बुद्धिस्थं बुध्यमानं पुरुषमाचार्याः । यदि ह्येष बुध्येत नाहमेतेषां प्रकृतिविकाराणामिति केवलश्च स्यादन्यश्च स्यात् । यदा त्वेष प्रकृतिविकारानधितिष्ठमानोऽभिमन्यते ममैते प्रकृतिविकारा अहमेतेषामिति तदैष प्रकृतिविकाराणामधिष्ठितत्वादकेवलः स्यात् । एवमाह ।

बुध्यमानो यदा बुद्ध्वा विकारानधितिष्ठति ।
तदा सह गुणैरेष सर्गप्रलयभाग्भवेत् ।
यदा त्वेष विकाराणामन्योऽहमिति मन्यते ।
तदा विकारानुत्क्रम्य परमव्यक्तमाप्नुयात् ।

इति ।

Colophon.

कपिल उवाच ।

यदप्युक्तं किं परात्परमिति । अत्र ब्रूमः । परात्परं नामासुरे कर्मेन्द्रियेभ्यः परं बुद्धीन्द्रियं बुद्धीन्द्रियेभ्यो मनो मनसो विशेषा विशेषेभ्यो महाभूतानि महाभूतेभ्योऽहंकारोऽहंकाराद्बुद्धिर्बुद्धेर्महान्महतश्चाव्यक्तम् । तदेतदासुरे परात्परं भवति । अपरमेतत् । परमेतेभ्योऽन्यः क्षेत्रज्ञस्त्वसर्गप्रलयधर्मा । असर्गप्रलयधर्मिणावबुद्धबुध्यमानावव्यक्तपुरुषौ । न त्वेतावद्बुध्यमानाप्रतिबुद्धत्वाद्बुद्धः । एवमाह ।

बुध्यमानाप्रतिबुद्धाभ्यां बुद्धस्य च निरात्मनः ।
परापरं विदित्वा तु न जन्म पुनराप्नुयात् ।

एवमेताभ्यां बुध्यमानाप्रतिबुद्धाभ्यामन्यं बुद्धं बुद्ध्वा न शोचतीति ।

Colophon.

कपिल उवाच ।

यदप्युक्तं किं पश्यापश्यमिति । अत्र ब्रूमः । अनादिनिधनादग्राह्यत्वादासुरे शाश्वतमव्यक्तम् । प्रसवधारणादानगुणस्वभावत्वादशाश्वतम् । अन्ये चाचार्यास्तथैवाधिष्ठातारमनेनैव हेतुना शाश्वतं च वर्णयन्ति । शाश्वतस्तु भगवान्क्षेत्रज्ञो बीजधर्मा प्रकृतिविकारयोर्व्यतिरिक्तः शुद्धधर्मा मुक्तधर्मा चेति । एवमाह ।

पश्यः पश्यति पश्यन्तमपश्यन्तं च पश्यति ।
अपश्यस्तावपश्यत्वात्पश्यापश्यौ न पश्यति ।

इति ।

यदप्युक्तं किं व्यतिरिक्तमिति । अत्र ब्रूमः । व्यतिरिक्तं नामासुरे पुरुषः पञ्चविंशकः क्षेत्रज्ञः । यथा पुष्करपर्णस्थो बिन्दुर्न श्लेषमुपगच्छत्यन्यत्वात्तथा क्षेत्रं क्षेत्रज्ञः । यथा मुञ्जादिषीका निष्कृष्टा न पुनराविशति अन्यत्वात्तथा क्षेत्रं क्षेत्रज्ञः । यथोदके प्रवर्तमाने मत्स्यो न प्रवर्ततेऽन्यत्वात्तथा क्षेत्रं क्षेत्रज्ञः । यथोदुम्बरे मशको भिन्न उदुम्बरे न पुनरभिष्वजतेऽन्यत्वात्तथा क्षेत्रं क्षेत्रज्ञः । यथा कूलाद्वृक्षः पतंस्तत्कूलं मुञ्चत्यन्यत्वात्तथा

---

बोधत्वात् (for °बुद्धत्वात्). — (L. 242) G7 अशुद्धं (for सुशुद्धं). G7 किं शुद्धमिति (for [अ]प्यशु°). — Colophon. *Adhy. name:* M5 कपिलासुरिसंवादः.

G7 om. from line 252 up to माचार्याः (in line 254). — (L. 255) G7 केवलः (for केवलश्च). — (L. 256) M5 ·विकारावधि· (for °रानधि·). — (L. 257) M5 तदेष (for तदैष). — (L. 261) G7 अन्योन्यम् (for अन्योऽहम्). — (L. 263) G7 om. इति. — Colophon. *Adhy. name:* M5 कपिलासुरिसंवादः.

(L. 266) G7 om. (hapl.) महाभूतानि. — (L. 267) G7 परावरेण (for परात्परं). — (L. 268) M5 om. अपरमेतत् । पर. M5 सर्गप्रलयधर्मः (for [अ]सर्गप्रलयधर्मा). G7 सर्ग· (for [अ]सर्ग·). — (L. 273) M5 शोचति (for °तीति). — Colophon. *Adhy. name:* M5 कपिलासुरिसंवादः.

(L. 275) G7 अनाद्यनिधनाद् (for अनादिनि°). — (L. 279) G7 व्यतिरिक्त· (for व्यतिरिक्तः). — Lines 280–281 = 29C, lines 267–268. — (L. 281) G7 पश्यतः (for पश्यति). — (L. 282) G7 om. इति. — (L. 284) G7 पुष्करपर्णे (for °पर्णस्थो). — (L. 286) M5 निकृष्टा (for निष्कृष्टा). — G7 om. (hapl.) from यथोदके (in line

क्षेत्रं क्षेत्रज्ञः। यथा वृक्षाद्वा शकुनिरुत्पतन्स तं वृक्षमुत्सृजत्यन्यत्वात्तथा क्षेत्रं क्षेत्रज्ञः। कस्मादन्यत्वात्। सर्वेषामेवमन्यत्वम् । कूलमन्यद्वृक्षोऽन्यः। मशकोऽन्योऽन्यदुदुम्बरम् । अन्यो मत्स्योऽन्यदुदकम् । मुञ्जमन्यदन्येषीका। अन्यदुदकमन्यत्पुष्करपर्णम् । तथान्यत्क्षेत्रं क्षेत्रज्ञोऽन्यः पुरुषः पञ्चविंशकः। अन्यश्चास्मात्क्षेत्रज्ञ इति ।

Colophon.

कपिल उवाच ।

यदप्युक्तं किं वियोगावियोगमिति। अत्र ब्रूमः। अवियोगो नामासुरे विषयविषयिणौ प्रति विश्लेषो न भवत्यप्रतिबुद्धत्वात्। वियोगो नामासुरे पुरुषः पञ्चविंशतीनां तत्त्वानामसंसक्तो नाहमेतेषामन्ये चैते ममेत्यनभिमन्यमानो वियोगी भवति ।

पञ्चविंशतितत्त्वज्ञः परात्मा भवतेऽमृतः।
स मुक्तस्तत्त्वसंतानात्परेण समतां व्रजेत् ।

Colophon.

कपिल उवाच ।

एवमेतदासुरे परं पुरुषादन्यद्व्यक्तमबुद्धं बुध्यमानोऽभिमन्यते। नानाभावात्क्षेत्रधर्माव्यक्तमक्षेत्रधर्मा क्षेत्रज्ञः । बीजधर्माव्यक्तमबीजधर्मा क्षेत्रज्ञः। सर्गधर्माव्यक्तमसर्गधर्मा क्षेत्रज्ञः। प्रकृतिधर्माव्यक्तमप्रकृतिधर्मा क्षेत्रज्ञः । गुणधर्माव्यक्तमगुणधर्मा क्षेत्रज्ञः । अविमलधर्माव्यक्तं विमलधर्मा क्षेत्रज्ञः । अबुद्धिधर्माव्यक्तं बुद्धिधर्मा क्षेत्रज्ञः । अशुचिधर्माव्यक्तं शुचिधर्मा क्षेत्रज्ञः । अमुक्तधर्माव्यक्तं मुक्तधर्मा क्षेत्रज्ञः। अविविक्तधर्माव्यक्तं विविक्तधर्मा क्षेत्रज्ञः। अकुशलधर्माव्यक्तं कुशलधर्मा क्षेत्रज्ञः। अपश्यधर्माव्यक्तं पश्यधर्मा क्षेत्रज्ञः। अचेतनधर्माव्यक्तं चेतनधर्मा क्षेत्रज्ञः। अवियोगधर्माव्यक्तं वियोगधर्मा क्षेत्रज्ञः। अविमोक्षधर्माव्यक्तं विमोक्षधर्मा क्षेत्रज्ञः। किं च भूयो द्रष्टा क्षेत्रज्ञो द्रष्टव्यमव्यक्तम् । श्रोता क्षेत्रज्ञः श्रोतव्यमव्यक्तम् । मन्ता क्षेत्रज्ञो मन्तव्यमव्यक्तम् । बोद्धा क्षेत्रज्ञो बोद्धव्यमव्यक्तम् । एवमेवासुरे अन्यदव्यक्तमन्यः पुरुषः पञ्चविंशतितत्त्वमन्यदन्योऽस्मात्क्षेत्रज्ञ इति ।

Colophon.

कपिल उवाच ।

एवमेतदासुरे बुद्ध्या बुद्ध्वा निर्द्वंद्वं निर्नमस्कारमस्वाहाकारस्वधाकारमनहंकारं क्षेत्रज्ञं शुद्धं निर्द्वंद्वेन निर्द्वितीयेन शुद्धेनालुब्धकेनाहिंसकेन यथालब्धोपजीविनाप्यपगतकामक्रोधलोभमोहमानदर्पेणात्मवता सर्वभूतदर्शनेन सम्यग्दृष्टिना यतात्मना शान्तेन दान्तेन शून्यागारनदीपुलिनवृक्षमूलवृक्षकोटरबुसागारावसथगृहानित्येन यात्रामात्रभोजनाच्छादनेन यत्र क्वचन शायिना भिक्षुणा स्वकार्यमनुष्ठातव्यम् । प्रतिभाव्यमुपसर्गं जित्वा योगेन योगकार्यमनुष्ठेयम् । तद्विविधं ध्यानम्। तद्यथा प्राणायामात्मकं चतुर्विधं सगुणप्राणायामात्मकं च मानसमगुणम् । तद्यथा श्रोत्रं श्राव्येभ्यः प्रतिसमावर्तयति घ्राणं घ्रेयेभ्यश्चक्षू रूपेभ्यस्त्वचं स्पर्शेभ्यो जिह्वां रसेभ्यो मनो मन्तव्येभ्योऽहंकारमभिमानेभ्यो बुद्धिं बोद्धव्येभ्यः । तदेतदिदमिन्द्रियग्राममस्मादिन्द्रियविषयात्स्वैः स्वं निरुध्य देवताः प्रतिसमावर्तयति। जलजानीव प्रलाययति मानसेभ्यः संकल्पेभ्यः प्रतिसमावर्तयति मानसमिन्द्रियाणि । मानसेभ्यश्चैवं संकल्पेभ्यः प्रतिसमावर्तयित्वा महात्मा क्रतुमुच्चयते। महाक्रतवो भूतादिश्च

287) up to क्षेत्रं क्षेत्रज्ञः। यथा (in line 289). —(L. 292) $G_1$ कूलमन्यो (for °मन्यद्). —(L. 294) $M_5$ क्षेत्रमन्यः (for क्षेत्रं क्षेत्रज्ञोऽन्यः). —(L. 297) $G_1$ विशेषो (for विश्लेषो न). —(L. 299) $G_1$ [अ]भिमन्यमानो (for [अ]नभि°). — $G_1$ om. lines 300-301. — Colophon. *Adhy. name:* $M_5$ कपिलासुरिसंवादः.

(L. 303ff.) The sequence of the pairs in $G_1$ is: क्षेत्र-अक्षेत्र, बीज-अबीज ($G_1$ subst. तत्त्व-अतत्त्व), सर्ग-असर्ग, प्रकृति-अप्रकृति, मुक्त-अमुक्त, विमल-अविमल, बुद्धि-अबुद्धि, विविक्त-अविविक्त, कुशल-अकुशल, शुचि-अशुचि, पश्य-अपश्य, चेतन-अचेतन, वियोग-अवियोग, मोक्ष-अविमोक्ष; while that in $M_5$ is: क्षेत्र-अक्षेत्र, विविक्त-अविविक्त, विमल-अविमल, चेतन-अचेतन, बुद्धि-अबुद्धि, वियोग-अवियोग, मोक्ष-अविमोक्ष. — $G_1$ om. (hapl.) the pair गुण-अगुण; while $M_5$ om. (hapl.) the pairs बीज-अबीज, सर्ग-असर्ग, प्रकृति-अप्रकृति, गुण-अगुण, शुचि-अशुचि, मुक्त-अमुक्त, विविक्त-अविविक्त, कुशल-अकुशल, पश्य-अपश्य, चेतन-अचेतन. — $G_1$ (in all cases) reads अव्यक्तः (for °क्तं). — Colophon. *Adhy. name:* $M_5$ कपिलासुरिसंवादः.

(L. 317) $G_1$ निर्नमस्कारः स्वाहाकारवषट्कारस्वधाकारान् (for निर्द्वंद्वं निर्नमस्कारमस्वाहाकारस्वधाकारम्). —(L. 318) $G_1$ अहंकारक्षेत्रज्ञशुद्ध- (for अनहंकारं क्षेत्रज्ञं शुद्धं). $G_1$ [अ]लुब्धेन (for [अ]लुब्धकेन). —(L. 320) $G_1$ -दर्शनसम्यग् (for -दर्शनेन स°). —(L. 321) $G_1$ -बुधागारावसथ- (for -बुसागारा°). —(L. 322) After भोजनाच्छादनेन, $G_1$ ins. च. —(L. 323) $G_1$ अपवर्गं (for उपसर्गं). —(L. 325) $G_1$ सगुणमप्राणायामात्मकं (for सगुणप्रा°). —(L. 326) $G_1$ यदा (for यथा). —(L. 330) $G_1$ प्रलयायेति (for प्रलाययति). —(L. 331) $G_1$ मानससंकल्पान् (for मानसम्). $G_1$ चैनं (for चैवं). After चैवं, $G_1$

भूतविशेषाश्च महत्यात्मनि महान्तमात्मानं कृत्स्नं च विवेचयित्वा व्यक्तमनुयुङ्क्ते। तत्रातीतः क्षेमी भवति तस्मादयं विवृतः। यश्च ततः क्षेत्रज्ञमसमावृतो भवति निर्द्वंद्वो निर्द्वितीयः शुद्धो मुक्तो नित्यः केवलो भवति। एषोऽन्त एषोऽपवर्ग एषा निष्ठा एतन्नैष्कर्म्यम्।

तद्यथा तथोपनयनेन पूर्वतरैश्चाचार्यैरुपदिष्टम्। तदेवमुपदेशः। तत्र श्लोको भवति।

> यथास्य जाग्रतः स्वप्नो यथा स्यात्तमसा वृतः।
> विभागज्ञस्य मोक्षस्तु यस्त्वज्ञः स पुनर्भवेत्।

Colophon.

कपिल उवाच।

एतावदेवासुरे ध्यानमनुवर्णितम्। परिसंख्यानमपि चोक्तम्। चतुर्विंशतितत्त्वमेतत्कारणमित्यत्र ब्रूमः। तदेतद्बुद्धिरर्थं बुध्यमानमेतदाचार्याः शुद्धमिच्छन्त्यनवबोधात्। नान्यमगुणं पुरुषम्। कस्त्वेषोऽधिष्ठातृसंज्ञकः प्रकृतिविकाराणामन्यस्त्वप्रतीकारः।

तदेतत्प्रकृतिविकारसंज्ञकादन्यदव्यक्तात्पुरुषं शुद्धं निष्कैवल्यमनवयवमजं क्षेम्यमेवाह।

> येनेयं ससुता बहुप्रसविनी लोकाश्रयालम्बिना
> योनिस्थाः पुरुषाश्च येन विदिता बुद्ध्या सदा बुद्धवत्।
> द्रष्टा चैव परो गुणैर्विरहितो ज्ञानातुरीयोऽक्षय-
> स्तद्वद्वर्तयतीह यः कृतमतिर्मुक्तः स योन्याधिकः।

तदेतदुपसंख्यानमनुवर्णितं याथातथ्यदर्शनादनवबुद्धानां प्रतिबोधनमिति।

Colophon.

कपिल उवाच।

साङ्गोपाङ्गेषु सेतिहासपञ्चमेष्वासुरे वेदेष्वष्टासु विद्यास्थानेष्वमृतमुद्धृत्य मयानुवर्णितं सांख्यज्ञानमेतावदेतज्ज्ञातव्यं पञ्चविंशतितत्त्वानि। तदेतन्नापुत्राय नाशिष्याय नासर्वस्वप्रदायिने नासंवत्सरोषिताय वा वर्तयितव्यम्। परमज्ञानमित्यर्थमृषयो वेदप्रोक्तं वेद्यं वेत्स्यन्तीति। तदेतदासुरे नावबुध्यन्त्यक्षीणपाप्मानोऽन्यथैव प्रवृत्ताः स्वाहाकारस्वधाकारोंकारवषट्कारैर्ऋषिकोटिसहस्राण्यनन्तानीष्टानिष्टकृतेन कर्मणा। तथैव देवदानवासुरपिशाचभूतराक्षसविद्याधरगन्धर्वयक्षनागकिंनरादयोऽन्ये भूतग्रामा अज्ञानपथमाश्रिता अज्ञानमेवावलीयन्ते। जायन्ते चासकृदसकृज्ज्ञानात्स्थावरनरकतिर्यग्योनिष्वेवोपपद्यन्ते वर्षकोटिशतसहस्राण्यनेकानि। कथंचित्कस्यचिद्धर्मबुद्धिरपि स्यात्। कुत एव मोक्षबुद्धिः।

तेऽप्यपवर्गेणैव सुखकामाः प्रतिकूलदुःखनिवर्तनमेव कुर्वन्तो भावोत्पादकं त्रैलोक्यादन्यदपश्यन्तो निःसरणं त्रैलोक्यमेवागाधं प्रपतन्ति। तद्वदासुरे लौकिकेष्वपि तु दर्शनेषु परं वेदप्रामाण्यम्। ते चापि दुःखसंसारवर्तका एव। कुत एव। वेदार्थं यज्ञो यज्ञार्थं स्वर्गः स्वर्गार्थं सुखं च मोहायतनमिष्टं मोहप्रभवं जन्म। तच्च सुखदुःखहेतुकमोहप्रभवं जन्म। तथैव चापि निधनम्। तच्चापि दुःखहेतुकरतम्। तस्मान्मन्त्रग्रामो दुःखस्य परस्परं हेतुः। तस्मादुपशमरुचयो दुःखसमुद्रौघमुक्तितीर्षन्तो हित्वा सर्ववेदानुपशमशास्त्रेषु प्रयुज्यन्ते। तदभ्यासाच्च शास्त्रस्य दुःखमार्गाविच्छेदं कुर्वन्ति। स्वात्मन्येकत्वेनावतिष्ठन्ते शीतीभूता अमृतं प्राप्ताः। एवमाह।

तेषां शास्त्राभ्यासाद्दुःखस्रोतो निवर्तते। अत्यन्तच्छिन्ने दुःखस्रोतसि शान्तिरिहान्ताय दुःखस्य। तदेतदासुरे मयोत्पन्नमात्रेणै-

---

ins. मानसेभ्यः. — (L. 332) G1 महा- (for महात्मा). G1 महात्मा कृतवो (for महाकृ°). — (L. 335) G1 क्षेत्रज्ञ (sic) (for °ज्ञम्). — (L. 336) G1 अंतं (for ऽन्त). — (L. 338) G1 यदुपदिष्टं (for उपदिष्टम्). G1 तदेव (for तदेवम्). — Colophon. *Adhy. name:* M5 कपिलासुरिसंवादः.

(L. 342) G1 एतदेव (for एतावदेव). — (L. 343) G1 बुद्धा स्वं (for बुद्धिरर्थं). — (L. 344) G1 शुद्धमित्यनवगच्छंति (for शुद्धमिच्छन्ति). — (L. 345) G1 अप्रकृतिविकारः (for अप्रतीकारः). — (L. 347) Before अव्यक्तात्, G1 ins. अव्यक्तम्. — (L. 348) After अनवयवं, G1 ins. अनामयम्. G1 एवमेव (for एव). — (L. 349) G1 योगाश्रयालंबिना (v. l. योगाश्रया°) (for लोकाश्रयालम्बिना). — For line 350, G1 subst.:

येनस्थाः पुरुषाश्च योनिविहिता बुद्धाप्रबुद्धा भगवान्।

— (L. 352) G1 यस्तद् (for तद्वद्). — Colophon. *Adhy. name:* M5 कपिलासुरिसंवादः.

(L. 355) G1 अष्टादशसु (for अष्टासु). — (L. 358) G1 वर्तितव्यं (for वर्तयित°). — (L. 363) G1 [उ]पलीयंते (for [अ]वलीयन्ते). — (L. 364) G1 -कोटिसहस्राणि (for -कोटिशत°). — (L. 366) G1 तत (for कुत). — (L. 367) G1 प्रतिकूला (for °कूल-). G1 एवं (for एव). — (L. 369) G1 om. तु. — (L. 370) G1 एवं कुर्वतः (for the first एव). — (L. 371) G1 स्वर्गः सुखार्थं (for स्वर्गार्थं). — (L. 374) G1 समुद्रौघमुतिष्ठंतो (for दुःखसमुद्रौघमुक्तितीर्षन्तो). — (L. 376) G1 एकत्वे वाव तिष्ठंते (for °त्वेनाव°). — (L. 377) G1 अमृत- (for अमृतं). — (L. 378) G1 छिन्ने (for अत्यन्तच्छिन्ने).

वावबुद्धं प्राकृतज्ञानम् । यदन्तरोत्पन्नस्तत्र भगवानिविरिञ्चोऽपि विक्रोशितवान्सप्तकृत्वः । यदा न तस्य कश्चित्प्रतिवचनं प्रायच्छत्ततः प्रवृत्तस्तत्र भवान्पुनः सर्गाय निवृत्त इति ।

Colophon.

भीष्म उवाच ।

तदेतत्परमज्ञानमासुरेराचार्येणानुशस्तं परमर्षिणा भगवता कपिलेन परेण बहुमानेन । भगवता चासुरिणा शास्त्रं भगवते पञ्चशिखाय पञ्चशिखेन कात्यायनाय कात्यायनेन गौतमाय गौतमेन गार्ग्याय गार्ग्येणावव्यायनाय आवव्यायनेनर्षिभ्य ऋषिभ्यः । ततेदत्परमं तत्परेण भगवता व्यासेन व्यासान्मयावाप्तं परमज्ञानं तथा मत्तो भवता प्राप्तमिति ।

तदेतद्ब्राह्मणांस्तात श्रावयेत्संशितव्रतान् ।
क्षत्रियान्याज्ञिकांश्चैव प्रजापालनतत्परान् ।
वैश्यांश्च नृपशार्दूल सर्वातिथ्यकृतव्रतान् ।
शूद्रांश्च शुश्रूषपरान्सर्वसत्त्वहिते रतान् ।
यद्यपि स्युस्त्रयो वर्णा यज्ञे चाधिक्रियन्ति वै ।
मन्त्रवर्जं तु शूद्राणां क्रिया दृष्टा इति श्रुतिः ।
सूत्रकारवचस्त्वेतद्वेदकारवचस्तदा ।
शास्त्रकारास्तथा चैतत्प्रवदन्तीति नः श्रुतम् ।

Colophon.

## 29 C

G1 M5 cont.:

युधिष्ठिर उवाच ।

क्लिश्यमानेषु भूतेषु जातीमरणसागरे ।
यत्प्राप्य क्लेशं नाप्नोति तन्मे ब्रूहि पितामह ।

भीष्म उवाच ।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सनत्कुमारस्य सतः संवादं नारदस्य च ।
सनत्कुमारो भगवान्ब्रह्मपुत्रो महायशाः ।
पूर्वजाश्च त्रयस्तस्य कथ्यन्ते ब्रह्मवादिनः ।
सनकः सनन्दनश्चैव तृतीयश्च सनातनः ।
जातमात्राश्च ते सर्वे प्रतिबुद्धा इति श्रुतिः ।
चतुर्थश्चैव तेषां स भगवान्योगसत्तमः ।
सनत्कुमार इति वै कथयन्ति महर्षयः ।
हैरण्यगर्भश्च मुनिर्वसिष्ठः पञ्चमः स्मृतः ।
षष्ठः स्थाणुश्च भगवानमेयात्मा त्रिशूलधृक् ।
ततोऽपरे समुत्पन्नाः पावकाद्वरुणकृतौ ।
मानसाः स्वयंभुवो हि मरीचिप्रमुखास्तथा ।
भृगुर्मरीचेरनुजो भृगोरप्यङ्गिरास्तथा ।
अनुजोऽङ्गिरसोऽथात्रिः पुलस्त्योऽत्रेस्तथानुजः ।
पुलस्त्यस्यानुजो विद्वान्पुलहोऽनुपमद्युतिः ।
पठ्यन्ते ब्रह्मजा ह्येते विद्वद्भिरमितौजसः ।
सर्गमेतन्महाराज कुर्वन्नादिगुरुर्महान् ।
प्रभुर्विभुरनन्तश्रीर्ब्रह्मा लोकपितामहः ।
मूर्तिमन्तोऽमृतीभूतास्तेजसातितपोन्विताः ।
सनकप्रभृतयस्तत्र त्रयः प्राप्ताः परं पदम् ।
कृत्स्नक्षयमनुप्राप्य विमुक्ता मूर्तिबन्धनात् ।
सनत्कुमारस्तु विभुर्योगमास्थाय योगवित् ।
विचचार त्रयो लोकानैश्वर्येण परेण ह ।
रुद्रश्चाप्यष्टगुणितं योगं प्राप्तो महायशाः ।
सूक्ष्ममष्टगुणं राजन्नेतरे नृपसत्तम ।
मरीचिप्रमुखास्तात सर्वे सृष्ट्यर्थमेव ते ।
नियुक्ता राजशार्दूल तेषां सृष्टिं शृणुष्व मे ।
सप्त ब्रह्माण इत्येष पुराणे निश्चयो गतः ।
सर्ववेदेषु चैवोक्ताः खिलेषु च न संशयः ।
इतिहासे पुराणे च श्रुतिरेषा पुरातना ।
वरदे कथ्यत इति प्राहुर्वेदान्तपारगाः ।

---

— (L. 381) G1 क्रोशितवान् (for विक्रो°). After सप्तकृत्वः, G1 ins. इति. — (L 382) G1 भगवान् (for भवान्). — Colophon. *Adhy. name:* M5 कपिलासुरिसंवादः.

— (L. 383) G1 परमं (for परम-). G1 [अ]नुशासितं (for °शस्तं). — (L. 387) G1 om. the second ऋषिभ्यः. — (L. 388) G1 om. तथा. G1 [अ]वाप्तम् (for प्राप्तम्). — (L. 392) G1 शुश्रूषणपरान् (hypermetric) (for शुश्रूषप°). — (L. 393) G1 यज्ञेनाधि- (for यज्ञे चा°).

— Colophon. *Adhy. name:* M5 कपिलासुरिसंवादः.

29 C

(L. 9) G1 योगमास्थितः (for °सत्तमः). — (L. 13) G1 वरुणाकृतौ (for °णकृतौ). — (L. 14) G1 मानसाः स्वयंभुवो भूमेर् (hypermetric). — (L. 18) G1 कथ्यंते (for पठ्यन्ते). — (L. 26) G1 -गुणितो (for °तं). (L. 31) M5 संशयाः (for °यः). — (L. 33) G1 परदे (sic) (for वरदे). — (L. 35) G1 गुणाः (for गणाः).

एतेषां पितरस्तात पुत्रा इत्यनुचक्षते ।
गणाः सप्त महाराज मूर्तयोऽमूर्तयस्तथा ।
पितॄणां चैव राजेन्द्र पुत्रा देवा इति श्रुतिः ।
देवैर्व्याप्ता इमे लोका इत्येवमनुशुश्रुम ।
कृष्णद्वैपायनाच्चैव देवस्थानात्तथैव च ।
देवलाच्च नरश्रेष्ठ काश्यपाच्च मया श्रुतः ।
गौतमादथ कौण्डिन्याद्भारद्वाजात्तथैव च ।
मार्कण्डेयात्तथैवैतदृषेर्देवतमात्तथा ।
पित्रा च मम राजेन्द्र श्राद्धकाले प्रभाषितम् ।
परं रहस्यं राजेन्द्र ब्रह्मणः परमात्मनः ।
अतः परं प्रवक्ष्यामि यन्मा पृच्छसि भारत ।
तदिहैकमनाः श्रद्धी शृणुष्वावहितो मम ।
स्वायंभुवस्य संवादं नारदस्य च धीमतः ।
सनत्कुमारो भगवान्दीपं जज्वाल्य तेजसा ।
अङ्गुष्ठमात्रो भूत्वा वै विचचार महामुनिः ।
स कदाचिन्महाराज मेरुपृष्ठे समेयिवान् ।
नारदेन नरश्रेष्ठ मुनिना ब्रह्मवादिना ।
जिज्ञासमानावन्योन्यं सकाशाद्ब्रह्मणस्तदा ।
ब्रह्मभागगतौ तात परमार्थार्थचिन्तकौ ।
मतिमान्मतिमच्छ्रेष्ठं बुद्धिमान्बुद्धिमत्तरम् ।
श्रुतिमाञ्श्रुतिमच्छ्रेष्ठं स्मृतिमान्स्मृतिमत्तरम् ।
क्षेत्रवित्क्षेत्रविच्छ्रेष्ठं ज्ञानविज्ञानवित्तमम् ।
लोकविल्लोकविच्छ्रेष्ठमात्मविच्चात्मवित्तमम् ।
सनत्कुमारं तत्त्वज्ञं भगवन्तमरिंदम ।
सर्ववेदार्थकुशलः सर्वशास्त्रविशारदः ।
सांख्ययोगं च यो वेद पाणावामलकं यथा ।
नारदोऽथ नरश्रेष्ठ तं पप्रच्छ महामतिम् ।
त्रयोविंशतितत्त्वस्य अव्यक्तस्य महामुने ।
प्रभवं चाप्ययं चैव श्रोतुमिच्छामि तत्त्वतः ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
कालसंख्याश्च सर्गांश्च तद्भवान्वक्तुमर्हति ।

सनत्कुमार उवाच ।

श्रूयतामानुपूर्व्येण नव सर्गाः प्रयत्नतः ।
तथा कालपरीमाणं तत्त्वानामृषिसत्तम ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
कालसंख्यां च सर्गं च सर्वमेव महामुने ।
तमसः कुर्वतः सर्गस्तामसेत्यभिधीयते ।
ब्रह्मविद्भिर्द्विजैर्नित्यं नित्यमध्यात्मचिन्तकैः ।
पर्यायनामान्येतस्य कथयन्ति मनीषिणः ।
तानि ते संप्रवक्ष्यामि तदिहैकमनाः शृणु ।
महार्णवोऽर्णवश्चैव सलिलं च गुणास्तथा ।
वेदास्तपश्च यज्ञाश्च धर्मश्च भगवान्विभुः ।
प्राणः संवर्तकोऽग्निश्च व्योम कालस्तथैव च ।
नामान्येतानि ब्रह्मर्षे शरीरस्येश्वरस्य वै ।
कीर्तितानि द्विजश्रेष्ठ मया शास्त्रानुमानतः ।
चतुर्युगसहस्रं तु चतुर्युगमरिंदम ।
प्राहुः कल्पसहस्रं वै ब्राह्मणास्तत्त्वदर्शिनः ।
दशकल्पसहस्राणि अव्यक्तस्य महानिशा ।
तथैव दिवसं प्राहुर्योगाः सांख्याश्च तत्त्वतः ।
निशां सुप्त्वाथ भगवान्क्षपान्ते प्रत्यबुध्यत ।
अहः कृत्वा सुखं तात ससर्ज प्रभुरीश्वरः ।
हिरण्यगर्भं विश्वात्मा ह्यण्डजं जलजं मुनिम् ।
भूतभव्यभविष्यस्य कर्तारमनघं विभुम् ।
मूर्तिमन्तं महात्मानं विश्वं शंभुं स्वयंभुवम् ।
अणिमालघिमाप्राप्तिमीशानं ज्योतिषां परम् ।
तस्य चापि निशामाहुर्वेदवेदाङ्गपारगाः ।
पञ्चकल्पसहस्राणि अहरेतावदेव च ।
न सर्गं कुरुते ब्रह्मा तामसस्यानुपूर्वशः ।
सृजते स त्वहंकारं परमेष्ठिनमव्ययम् ।
अहंकारेण वै लोका व्याप्तास्त्वाहंकृतेन च ।
येनाविष्टानि भूतानि मज्जन्त्यव्यक्तसागरे ।
देवर्षिदानवनरा यक्षगन्धर्वकिंनराः ।
उन्मज्जन्ति निमज्जन्ति ऊर्ध्वाधस्तिर्यगेव च ।
एतस्यापि निशामाहुस्तृतीयमथ कुर्वतः ।
त्रीणि कल्पसहस्राणि अहरेतावदेव च ।
अहंकारश्च सृजति महाभूतानि पञ्च वै ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।

(L. 44) G1 मां (for मा). — (L. 47) G1 जज्वाल (for °ल्य). — (L. 51) G1 ततः (for तदा). — (L. 53) G1 बुद्धिमत्तमं (for °मत्तरम्). — (L. 55) G1 ज्ञान°विज्ञानवित्तरं (for the post. half). — Before 61, G1 ins. नारदः. — (L. 64) G1 कालसंख्या च सर्गश्च. — (L. 66) G1 °परिणामं (for °परीमाणं). — (L. 68) G1 °संख्या (for °संख्यां). — (L. 78) G1 चतुर्युगसहस्रात्तु (for the prior half). — (L. 80) G1 महायशाः (for °निशा). — (L. 82) G1 क्षपान्ते प्रतिबुध्यते (for the post. half). — (L. 84) G1 अजं च जनितं मुनिं (for the post. half). — (L. 87) M5 (also as above) °महिमा° (for °लघिमा°). — (L. 92) G1 वै (for च). — (L. 99) G1 पंचमः (for

एतेषां गुणतत्त्वानि पञ्च प्राहुर्द्विजातयः ।
शब्दे स्पर्शे च रूपे च रसे गन्धे तथैव च ।
गुणेष्वेतेष्वभिरताः पङ्कलग्ना इव द्विपाः ।
नोत्तिष्ठन्त्यवशीभूताः सक्ता अव्यक्तसागरे ।
एतेषामिह वै सर्गं चतुर्थमिह कुर्वताम् ।
द्वे तु कल्पसहस्रे वै अहो रात्रिस्तथैव च ।
अनन्त इति विख्यातः पञ्चमः सर्ग उच्यते ।
इन्द्रियाणि दशैकं च यथाश्रुतिनिदर्शनात् ।
मनः सर्गगतं तात विशत्सर्वमिदं जगत् ।
न तथान्यानि भूतानि बलवन्ति यथा मनः ।
एतस्यापि तु वै सर्गं षष्ठमाहुर्द्विजातयः ।
अहः कल्पसहस्रं वै रात्रिरेतावती तथा ।
उर्ध्वस्रोतस्तु वै सर्गं सप्तमं ब्राह्मणा विदुः ।
अष्टमश्चाप्यधःस्रोतस्तिर्यक्तु नवमः स्मृतः ।
एतानि नव सर्गाणि तत्त्वानि च महामुने ।
चतुर्विंशतिरुक्तानि कालसंख्याश्च तेऽनघ ।
अप्ययं प्रभवं चैव अव्यक्तस्य महामुने ।
प्रवक्ष्याम्यपरं तत्त्वं यस्य यस्येश्वरश्च यः ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
यथाश्रुतं यथादृष्टं तत्तथा वै निबोध मे ।

Colophon.

सनत्कुमार उवाच ।

अधःस्रोतसि सर्गे च तिर्यक्स्रोतसि चैव ह ।
एताभ्यामीश्वरं विद्यादूर्ध्वस्रोतस्तथैव च ।
कर्मेन्द्रियाणां पञ्चानामीश्वरो बुद्धिगोचरः ।
बुद्धीन्द्रियाणामथ तु मन ईश्वरमुच्यते ।
मनसः पञ्च भूतानि सगुणान्याहुरीश्वरम् ।
भूतानामीश्वरं विद्याद्ब्रह्माणं परमेष्ठिनम् ।
भवान्हि कुशलश्चैव धर्मेष्वेव परेषु वै ।
कालाग्निरप्यहः स्वं ते जगद्दहति चांशुभिः ।
ततः सर्वाणि भूतानि स्थावराणि चराणि च ।
हाहाभूतानि दग्धानि स्वयोनिं गमितानि वै ।
कूर्मपृष्ठनिभा भूमिर्निर्दग्धकुशकण्टका ।
निर्वृक्षा निस्तृणा चैव दग्धा कालाग्निना तदा ।
जगत्प्रलीनं जगति जगत्यप्सु प्रलीयते ।
नष्टगन्धा तदा सूक्ष्मा जलमेवाभवत्तदा ।
ततो मयूखजालेन सूर्यस्यापीयते जलम् ।
जलात्मा प्रलीयत्यर्के तदा ब्राह्मणसत्तम ।
अन्तरिक्षगतान्भूतान्प्रदहत्यनलस्तदा ।
अग्निभूतं तदा व्योम भवतीत्यभिचक्षते ।
तं तथा विस्फुरन्तं हि वायुर्ध्वंसयते महान् ।
महता बलवेगेन आदत्ते तं हि भानुमान् ।
वायोरपि गुणं स्पर्शमाकाशं ग्रसते यदा ।
प्रणश्यति तदा वायुः खं तु तिष्ठति नानदत् ।
तस्य तं निनदं शब्दमादत्ते वै मनस्तदा ।
स शब्दगुणहीनात्मा तिष्ठतेऽमूर्तिमांस्तु वै ।
भुक्ते तु स तदा व्योम मनस्तात दिगात्मकम् ।
व्योमात्मनि विनष्टे तु संकल्पात्मा विवर्धते ।
संकल्पात्मानमादत्ते चित्तं वै स्वेन तेजसा ।
चित्तं ग्रसत्यहंकारस्तदा वै मुनिसत्तम ।
विनष्टे च तदा चित्ते अहंकारो भवेन्महान् ।
अहंकारं तदादत्ते महान्ब्रह्मा प्रजापतिः ।
अभिमाने विनष्टे तु महान्ब्रह्मा विराजते ।
तं तदा त्रिषु लोकेषु मूर्तिष्वेवाग्रमूर्तिजम् ।
येन विश्वमिदं कृत्स्नं निर्मितं वै गुणार्थिना ।
मूर्तिं जलेश्वरमपि व्यवसायगुणात्मकम् ।
ग्रसिष्णुर्भगवान्ब्रह्मा व्यक्तोऽव्यक्तमसंशयम् ।
एषोऽप्ययश्च प्रलयो मया ते परिभाषितः ।
अध्यात्ममधिभूतं च अधिदैवं च श्रूयताम् ।

आकाशं प्रथमं भूतं श्रोत्रमध्यात्मं शब्दोऽधिभूतं दिशोऽधिदैवतम् । वायुर्द्वितीयं भूतं त्वगध्यात्मं स्पर्शोऽधिभूतं विद्युदधिदैवतं स्यात् । ज्योतिस्तृतीयं भूतं चक्षुरध्यात्मं रूपमधिभूतं सूर्योऽधिदैवतं स्यात् । आपश्चतुर्थं भूतं जिह्वाध्यात्मं रसोऽधिभूतं सोमोऽधिदैवतं स्यात् । पृथिवी पञ्चमं भूतं घ्राणम-

°मम्). —(L. 103) G1 वशीभूताः (for [अ]वशी°). —(L. 104) G1 कुर्वतः (for °ताम्). —(L. 105) G1 अहोरात्रस् (for अहो रात्रिस्). —(L. 113) G1 अष्टमं (for °मश्). —(L. 115) G1 चतुर्विंशतिसूक्तानि. —Colophon. *Adhy. name*: M5 सनत्कुमारगीता.

(L. 120) G1 om. the ref. —(L. 124) G1 सद्गुणानि (for सगुणानि). —(L. 127) G1 कलाग्निरहस्त्वं ते (for the prior half). —(L. 135) G1 प्रविलीयति (for प्रलीयति). —(L. 136) G1 सर्वान् (for भूतान्). G1 तथा (for तदा). —(L. 138) G1 वायुर्ध्वंसायते महान् (for the post. half). —(L. 143) G1 स शब्दगुणवानात्मा (for the prior half). —(L. 148) G1 अहंकारमवे महान् (for the post. half). —(L. 154) M1 व्यक्ताव्यक्तम् (for व्यक्तोऽव्यक्तम्). —(L. 155) G1

ध्यात्मं गन्धोऽधिभूतं वायुरधिदैवतं स्यात्। पाञ्चभौतिकमेतच्चतुष्टयमनुवर्णितम्।

अत ऊर्ध्वं त्रिविधमिन्द्रियविधिमनुवर्णयिष्यामः। पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतं स्यात्। हस्तावध्यात्मं कर्तव्यमधिभूतं इन्द्रोऽधिदैवतं स्यात्। पायुरध्यात्मं विसर्गोऽधिभूतं मित्रोऽधिदैवतं स्यात्। उपस्थमध्यात्ममानन्दोऽधिभूतं प्रजापतिरधिदैवतं स्यात्। वागध्यात्मं वक्तव्यमधिभूतं अग्निरधिदैवतं स्यात्। मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधिदैवतं स्यात्। अहंकारोऽध्यात्ममभिमानोऽधिभूतं विरिञ्चोऽधिदैवतं स्यात्। बुद्धिरध्यात्मं व्यवसायोऽधिभूतं ब्रह्माधिदैवतं स्यात्। एवमव्यक्तो भगवानसकृदसकृत्सर्गान्कुरुते संहरते च। कस्मात्क्रीडार्थम्। यथादित्योंऽशुजालं क्षिपति संहरते च यथा चान्तरिक्षादभ्रकोश उत्तिष्ठति।

स्तनितं गर्जितोन्मिश्रं तच्च तत्रैव प्राणशत्।

एवमव्यक्तो गुणान्सृजति संहरते च। यथा चार्णवादूर्मिजालं नीचोच्चं प्रादुर्भवति तच्च तत्रैव प्राणशदेवमव्यक्तो लोकान्सृजति संहरते च। यथा च कूर्मोऽङ्गानि कामात्प्रसारयते पुनश्च प्रवेशयत्येवमव्यक्तो लोकान्प्रसारयति गिरति च। चेतनश्च भगवान्पञ्चविंशकः शुचिः। तेनाधिष्ठिता प्रकृतिश्चेतयति। नित्यं सहधर्मा च भगवतोऽव्यक्तस्य क्रियावतोऽक्रियावान्भगवान्परमप्रकृतिरणुः क्षेत्रज्ञः क्षेम्य इति।

Colophon.

नारद उवाच।

यद्यचेतना प्रकृतिश्चेतनाधिष्ठिता चेतयति कस्मान्न मोक्षोऽस्ति। भवद्विधानां चेतस्काङ्क्षिणां चेतो हि पञ्चविंशकमुपदिशन्ति योगाः सांख्याश्च। तच्चायुक्तमुपदिशन्ति। तद्वचनाच्चायुतप्रकृतिसहधर्मा प्रकृतिं वर्तमानामनुवर्तते इति। अनुवर्तमानाच्च मन्यामहे अधिष्ठातृत्वादणुत्वाच्चेत इति। अतश्च भवत्येव दोष इति। यथा हि कश्चिद्दीर्घमध्वानं गच्छति सङ्गवान्। असङ्गस्यागमवतो गमने न प्रयोजनं भवति। अथ गच्छति सोऽपि सङ्गी भवति। मत्स्यश्चोदकं सहधर्मिणावेव। एवं भगवद्वचनात्प्रकृतिपुरुषौ। यद्युदकं प्रवर्तमानं मत्स्योऽनुप्रवर्तते ननु सङ्गवान्भवति असङ्गी मत्स्यस्तस्य किं सङ्गवृत्त्यानुवर्तनेन।

सनत्कुमार उवाच।

देवर्षे तत्रासङ्गं वर्णयन्ति पुरुषस्य। न भगवता व्यक्तेन सङ्गोऽस्ति निर्गुणस्य गुणिना। तत्र श्लोकानुदाहरन्ति बुधाः। तानुपधारयस्वैकार्थे पर्यायवचनं कृत्वा।

अधिष्ठा पुरुषो नित्यं प्रकृत्या न च आत्मनः।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते।
चेतना पुरुषो नित्यं कालस्य न च आत्मनः।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते।
द्रष्टा हि पुरुषो नित्यं मनसो न च आत्मनः।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते।
बोद्धा हि पुरुषो नित्यं वेदस्य न च आत्मनः।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते।
ज्ञाता हि पुरुषो नित्यं क्षेत्रस्य न च आत्मनः।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते।
कर्ता हि पुरुषो नित्यं परस्य न च आत्मनः।
तस्याभिमानो भवति तस्मादासङ्ग उच्यते।

देवर्षे तत्रासङ्गमनुवर्णयन्ति पुरुषस्य। शुचिर्हि भगवान्क्षेत्रज्ञोऽशुचिर्नीं प्रकृतिमुदाहरन्ति। सङ्गी हि सङ्गवान्सङ्गी चासङ्ग इति योऽसङ्गो ह्यात्मानं सङ्गिनमनुपश्यति स खल्वज्ञानीत्युच्यते बुधैरिह।

एतस्याविद्याग्रस्तस्य उद्भवाक्षेपशतसहस्रकोटिशोऽप्ययमानस्याव्यक्तसागरे सुमहान्दुःखयोगो भवति। यथा च समुद्रं प्रयातस्य कृतप्रायश्चित्तस्य अर्थतर्षिणो वणिक्संघस्य यानपात्रार्णवोदरगतश्चण्डवायुना भिद्यमान इतस्ततश्च विमलाभिरूर्मिभिर्भिद्यमानो हाहाभूतो जनो व्यापद्येत्। शतशश्चाप्राप्तमनोरथाः प्लवान्गृहीत्वा। प्लवाश्चोन्मज्जन्ति निमज्जन्ति चान्योन्यमवलम्बमानाः। एवमज्ञानी पुरुष उन्मज्जति निमज्जति च। यथा

---

पक्षोप्ययो हि प्रलयो (for the prior half). —(L. 167) G7 विष्णुरधिदैवतं (for मित्रोऽधिदैवतं). G7 उपस्थोध्यात्मम् (for उपस्थमध्या°). —(L. 172) G7 असकृद् (for असकृदसकृद्). —G7 om. (hapl.) from यथा चार्णवादूर्मि (in line 176) up to संहरते च (in line 178). —(L. 181) G7 परमः प्रकृतिरहितः (for परमप्रकृतिरणुः). —(L. 185) G7 तद्वचनाच्चायुक्तः (for तद्वचनाच्चायुत°). —(L. 186) G7 अनुवर्तनाच्च (for °वर्तमानाच्च). —(L. 187) G7 एष (for एव). —(L. 189) G7 गमने (for गमने न). —(L. 204) G7 श्रोता (for ज्ञाता). —(L. 208) G7 वर्णयंति (for अनुवर्णयन्ति). —(L. 209) G7 असंगी (for सङ्गी). —(L. 211) G7 om. बुधैरिह. —(L. 212) G7 om. सहस्र. G7 [ऽ]प्येधमानस्य (for ऽप्यय°). —(L. 214) G7 हुत- (for कृत-). G7 यानपात्रेर्णवादागतचंडवायुना (for °पात्रार्णवोदरगतश्चण्डवायुना). —Colophon. *Adhy. name:* M8 सनत्कुमारगीता.

तत्रोन्मज्जंश्च निमज्जंश्च कश्चित्पारमासादयति स मुक्तस्ततस्तस्यापदो मृत्युमुखात् ।

Colophon.

नारद उवाच ।

भगवन्नच्छेद्याभेद्यादाह्यातर्क्यानन्त्याकल्प्यानादिमध्या यदा प्रकृतिस्तद्वत्पुरुषोऽप्येभिरेव गुणैर्युतः । तत्कथमनित्यां प्रकृतिमुदाहरन्ति नित्यं पुरुषमिति ।

सनत्कुमार उवाच ।

देवर्षे सम्यगभिहितं भवता । अच्छेद्याभेद्यादाह्यातर्क्यानन्त्याकल्प्यानादिमध्या प्रकृतिर्हि पुरुषश्च । कर्तृत्वाद्गुणानामनित्यां प्रकृतिमुदाहरन्ति अकर्तृत्वान्नित्यः पुरुषः । यदि प्रकृतिर्गुणान्कुर्याद्विद चात्मानं पुरुषश्च । नित्यानित्यभावे वीतरागत्वे चास्य निर्द्वंद्वता च । यदा त्वयमेव स्यान्नान्यदस्ति मम परमित्यभिमन्यमानो नित्यत्वतामेति । तत्र श्लोकानुदाहरन्ति ।

उभावमूर्तौ ह्यजरावुभावेव महात्मभिः ।
विदितौ विषयी चैव विषयश्च महामुने ।
पुरुषो विषयी नित्यं प्रकृतिर्विषयः स्मृतः ।
व्याख्यातौ शास्त्रविद्भिर्हि मशकोदुम्बरौ यथा ।
प्रकृतिर्न विजानाति भुज्यमानमचेतनम् ।
पुरुषश्चापि जानाति भुङ्क्ते यश्च स भुज्यते ।
महदादयो गुणा भोज्यं भोक्ता तु प्रकृतिर्द्विज ।
मन्यन्त्येवं विभागज्ञा भोक्तारं तस्य चेश्वरम् ।
ऐश्वर्यं भवतीशत्वात्प्रकृत्या द्विजसत्तम ।
अनीशत्वादनैश्वर्यं पुरुषस्यानुचक्षते ।
विभूतित्वाद्विभुत्वं हि पुरुषस्य महामुने ।
द्वंद्वभावादनित्यं हि त्रिगुणा प्रकृतिस्तथा ।
निर्द्वंद्वो निर्गुणो नित्यः पुरुषोऽत्रानुचक्षते ।
क्रियाकरणयोगित्वादनित्या प्रकृतिर्द्विज ।
क्रियाकरणहीनो हि नित्यः पुरुष उच्यते ।

एवमनुमन्यन्ते यतयः स्तुन्वानाः पुरुषम् । सत्त्वं क्षेत्रं परं गुहाक्षयकरं चलव्रणकरं निशिचरं निधिर्मतिः स्मृतिर्धृतिरिति चैतानि प्रकृतिपर्यायनामानि । अथापराणि भूतं भव्यं भविष्यमिति । सत्त्वं रजस्तम इति त्रिगुणमेतत्प्रकृतिरित्यनुपश्यति । अथ तदव्यक्तात्परमव्ययं शिवं क्षेममयं शुचि व्यभ्रमिति विमलममलमचलमजरमकरमतरमभवमिति । अभवनमनयनमगमनं पृथगिति चैतानि पुरुषपर्यायनामानि । अत्र पश्यन्तु भवन्तः क्षेत्रज्ञं विमोक्षं विशोकं विमोहम् । विदम्भाद्विलोभाद्विकाराद्विरुद्धादानृशंस्यादलौल्यमशरणमभयमनवयवं पश्यन्ते । तद्यथा मशकोदुम्बरयोर्विवासमहवासोऽन्य एव स्वभाव एवमेव ज्ञानाज्ञानयोर्विवाससहवासः । अन्यदेव ज्ञानमज्ञानम् । क्षेत्रज्ञस्त्यक्ष्यति प्रकृतिं न च प्रकृतिः क्षेत्रज्ञं त्यक्ष्यति । मन्यते प्रकृतिं क्षेत्रज्ञो न च प्रकृतिः क्षेत्रज्ञं मन्यते । बुध्यते प्रकृतिं क्षेत्रज्ञो न च प्रकृतिः क्षेत्रज्ञं बुध्यते । पश्यति प्रकृतिं क्षेत्रज्ञो न च प्रकृतिः क्षेत्रज्ञं पश्यति । एतद्विवाससहवासमित्येनद्ध्यानात्वदर्शनं पश्यन्ति देवर्षे । ज्ञातारं तदसङ्गमनुपश्यतु भवान्पुरुषे । अत्र श्लोकमुदाहरन्ति ।

योगाश्च सांख्याश्च वदन्ति सम्य-
क्पञ्चविंशात्परमस्ति किंचित् ।
अथान्यथा पश्यति तत्त्वमेत-
द्वयं तु पश्याम गुरोर्नियोगात् ।

इत्येतद्योगदर्शनम् । अत्र सांख्यैर्गीतम् । श्लोको भवति ।

पश्यः पश्यति पश्यन्तमपश्यन्तं च पश्यति ।
अपश्यस्तावपश्यत्वात्पश्यापश्यौ न पश्यति ।

प्रकृतिः क्षेत्रं क्षेत्रज्ञश्चापरः । क्षेत्रज्ञः षड्विंशकोऽनुपश्यति ।

—(L. 225) G7 om. हि. G7 [अ]गुणानाम् (for गुणा°). —(L. 227) G7 पुरुषं (for °षश्). G7 नित्यानित्यभाव- (for °नित्यभावे). —(L. 228) G7 चास्य (for च). G7 एवं (for एव). G7 om. मम. —(L. 229) G7 नित्यत्वम् (for °त्वताम्). —(L. 245) G7 om. यतयः स्तुन्वानाः पुरुषम्. —(L. 246) G7 शुभाकारकं (for गुहाक्षयकरं). G7 चलं पूर्णकरं (for चलव्रणकरं). G7 निशाकरं (for निशिचरं). G7 निशि निधिस्मृतिर्मतिरिति (for निधिर्मतिः स्मृतिर्धृतिरिति). —(L. 247) G7 अभूतमभव्यमिति (for भविष्यमिति). —(L. 248) G7 प्रकृतिम् (for °तिर्). —(L. 249) G7 पुरुषम् (for परम्). —(L. 250) G7 अमरम् (for अकरमतरम्). G7 अभवम् (for अभवनम्). —(L. 252) G7 विलोभ- (for विलोभाद्). —(L. 253) G7 अलोल्यम् (for अलौ°). G7 पश्यति (for पश्यन्ते). —(L. 254) G7 एतद् (for तद्). G7 -सहवासम् (for °वासो). —(L. 255) M6 विवाद- (for विवास-). G7 प्रकृतिज्ञानं (for अज्ञानम्). —(L. 256) G7 नवप्रकृतिं (for न च प्रकृतिः). After त्यक्ष्यति, G7 ins. मन्यते प्रकृतिं क्षेत्रज्ञं त्यक्ष्यति. —(L. 258) G7 प्रकृतिं क्षेत्रज्ञः (for प्रकृतिः क्षेत्रज्ञं). —(L. 260) G7 दैवज्ञाः (for देवर्षे). G7 तदंगं पश्यतु भवान्पुरुषः (for ज्ञातारं तदसङ्गमनुपश्यतु भवान्पुरुषे). —(L. 264) G7 एतं (for एतद्). —Lines 267–268 = 29B 280–81. —(L. 268) G7 पश्यतः (for °ति). —(L. 269) G7 क्षेत्रज्ञः क्षेत्रज्ञं (for क्षेत्रं क्षेत्रज्ञश्). —(L. 271) G7 देवर्षेयमयः

न तत्पञ्चविंशः क्षेत्रज्ञः प्रकृतिर्वा परं क्षेत्रज्ञं पश्यति। देवर्षे यन्मया बहुभिर्जन्मभिरवाप्तमिदानीम्। ये ह्येवं पश्यन्ति शिवं हि तेषामिहैव चामुत्र संशयो नास्ति। सुखं परं जन्म चाहं ब्रवीमि। न त्वितरं मृत्युं विवेदाहम्।

प्रतिविरम स बुद्धिविग्रहात्परमशुचिस्त्वमुपास निर्ममः।
बहुभिररिभिरेतदावृतं प्रकृतिमयं हि शरीरमध्रुवम्।
यदि जयसि शरीरमेकतो ननु विजितास्तव सर्वशत्रवः।
मुनिभिर्ऋषिभिरीरितं परं परमशुचिं तमुपास्य ते गताः।

एतन्मयोपसन्नेषूपदिष्टं देवर्षे हिरण्यनाभस्य महासुरस्य शिवस्य चैतन्नमुचेर्नारदस्य प्रह्लादस्य वृत्रस्य विरोचनस्य बलेर्मरीचेः पुलस्त्यपुलहयोः। तथैव भृग्वङ्गिरसोरत्रिवसिष्ठकाश्यपानां शुक्रस्य चेन्द्रस्य बृहस्पतेश्चाङ्गिरसोत्तमाय। तथैव विश्वावसवे मयोक्तं गन्धर्वाप्सरोभिश्च। एतद्ब्रह्म सर्वत्र समं द्रष्टव्यम्। ब्रह्मणि चेन्द्रे शुनि कीटे पतंगदंशमशकेषु सम्यगनुदर्शनाच्च पश्यामः। सर्वस्य मोक्षधर्मो विद्यते। एतत्पदमनुद्विग्नं जन्ममृत्युतमोनुदमुपशान्तं समुत्तीर्णमवस्थितमपज्वरम्।

भीष्म उवाच।

एतच्छ्रुत्वा मुनिश्रेष्ठो नारदः स महामुनिः।
परया च मुदा युक्तः प्रणम्य शिरसा गुरुम्।
प्रदक्षिणं च तं कृत्वा जगाम भवनं स्वकम्।
भगवानपि तत्रैव सद्यस्त्वन्तरधीयत।

Colophon.

## 29 D

$G_1$ $M_5$ cont.:

भीष्म उवाच।

संयमनः काशिपतिरविमुक्तगतं मुनिं पप्रच्छ ज्ञानविज्ञानं कपिलादागतागमम्।

संयमन उवाच।

को विश्वं सृजते सर्वमिदं संहरते च कः।
कश्च विश्वमधिष्ठाय तिष्ठत्यग्निवद्दारुषु।
कश्च विश्वमविश्वं च नित्यमेवानुपश्यति।
कौ च तौ मुनिशार्दूल नमस्ये तावुभावपि।
कति तत्त्वानि विश्वात्मा भगवान्हव्यकव्यभुक्।
किं च हव्यं च कव्यं च पठ्यते शास्त्रदर्शनात्।
कश्च सत्त्वात्समुत्पन्नस्तस्मात्तत्त्वाद्विशारदः।
कश्च तत्त्वादिरित्युक्तस्तथा प्राणादिरेव च।
भूतादिश्च मुनिश्रेष्ठ विकारादिस्तथैव च।
कस्मादाददते चैव विसृज्य च पुनः पुनः।
अध्यात्ममधिभूतं च अधिदैवं तथैव च।
विमोक्षश्चास्य भगवन्योऽयं देहेषु वर्तते।
सविज्ञानं सदशकं तथोपनिषदं मुने।
वर्तते त्वयि कार्त्स्न्येन योगशास्त्रं तथैव च।
पुराणं च मुनिश्रेष्ठ यथाबुद्धि सनातनम्।
साङ्गोपाङ्गाश्च चत्वारो वेदास्तिष्ठन्ति वेदवित्।
सर्वस्य चास्य ज्ञानस्य ग्रन्थतश्चार्थतश्च ते।
विदितं वेदितव्यं हि पाणावामलकं यथा।
परावरज्ञो भगवानित्येवमनुशुश्रुम।
तेन त्वामनुपृच्छामि सर्वभूतहिते रतम्।
परोक्षमेतदस्माकं तव प्रत्यक्षमेव च।
मन्याम मनसा देव यतीनां यतिसत्तम।
तदनुग्रहधर्मेण अक्षयेणाव्ययेन च।
शाश्वतेनाप्रमेयेन अचलेनामृतेन च।
जन्ममृत्युविमुक्तेन योक्तुमर्हसि मानद।
सर्वथा तेन देहेन असद्ग्रन्थेन मे मुने।
बध्यामि भगवन्नित्यमित्यर्थमहमागतः।
काशिराज्यं परित्यज्य भगवन्तमरिंदम।
तदेतच्छ्रोतुमिच्छामि याथातथ्येन तत्त्वतः।

---

(sic) (for देवर्षे यन्मया). $G_1$ आत्मभिर् (for जन्मभिर्). — (L. 274) $G_1$ -विरमस्व (for °म स). $G_1$ उपासन् (for उपास). — (L. 277) $G_1$ निर्मितं (for ईरितं). $G_1$ -शुचिम् (for -शुचिं तम्). — (L. 279) $G_1$ om. प्रह्लादस्य. — (L. 283) $G_1$ पतंगे (for पतंग-). — (L. 287) $G_1$ द्विज- (for मुनि-). — (L. 288) $G_1$ मुदया (for च मुदा). — (L. 289) $G_1$ कृत्वाथ (for तं कृत्वा). — Colophon. *Adhy. name:* $M_5$ सनत्कुमारगीता समाप्ता.

29 D

— (L. 6) $G_1$ नमस्य (for °स्ये). — (L. 9) $G_1$ (also as above) तत्त्वात् (for सत्त्वात्). — (L. 11) $G_1$ विकारादिस् (for मुनिश्रेष्ठ). $G_1$ तथैव च दयानिधे (for the post. half). — (L. 12) $G_1$ पुनः सृजति वै कथं (for the post half). — (L. 14) $G_1$ विमोक्षं (for °क्षश्). $G_1$ भगवान् (for °वन्). — (L. 15) $G_1$ सर्वज्ञानं (for सवि°). — (L. 17) $G_1$ यथा बुद्धिः (for यथाबुद्धि). — (L. 22) $G_1$ त्वा परि- (for त्वामनु-). — (L. 28) $M_5$ सकृदन्येन (for असद्ग्रन्थेन). — (L. 29) $G_1$ ध्यायामि

ममानतस्य भगवञ्शिष्यस्यामितबुद्धिमान् ।
वक्तुमर्हसि शान्त्यर्थमेतमर्थं महामुने ।
ममोद्वहत्येव मनः तत्त्वं श्रोतुं परायणम् ।
पापघ्नममृतं श्रेष्ठं पवित्राणां परायणम् ।

पञ्चशिख उवाच ।

श्रूयतां नृपशार्दूल सर्वमेतदसंशयम् ।
सर्वस्य चास्य ज्ञानस्य कृत्स्नकारी भवानपि ।
विशनाद्विश्वमित्याहुर्लोकानां काशिसत्तम ।
लोकांश्च विश्वमेवेति प्रवदन्ति नराधिप ।
लोकानामप्यविशनादविश्वमिति तं विदुः ।
ईदृग्भूतीयमेवाहुरपरं शास्त्रदर्शनात् ।
विश्वाविश्वे नरश्रेष्ठ तत्त्वबुद्धिपरायणाः ।
नराणां नरशार्दूल तत्त्वमेतदसंशयम् ।
अमृताश्च त्रयोऽप्येते नित्याश्चेति वदन्ति वै ।
विभागिनश्च वै नित्यं विमलाश्चेति नः श्रुतिः ।
अजाश्चामूर्तयश्चैव अप्रकम्प्याव्ययाश्च ह ।
अग्राह्याश्चाप्रतर्क्याश्च तथामर्त्याश्च पार्थिव ।
अनादिनिधनाश्चैव तथामूर्त्याश्च तेऽनघ ।
अच्छेद्याश्चामराश्चैव अप्रदह्यतमाश्च वै ।
निर्गुणाश्चेतनाश्चैव पश्याश्चेति नराधिप ।
यथैतदुक्तमाचार्यैरेवमेतदसंशयम् ।
सन्ति सर्वे गुणा ह्येषां त्रयाणां नृपसत्तम ।
अहं तत्त्वं प्रवक्ष्यामि यथा चाचार्यदर्शनम् ।
एकोऽत्र गुणवांश्चैव तथैवाचेतनश्च ह ।
अपश्यश्च महाराज प्रधान इति पठ्यते ।
प्रत्ययं चोपसर्गौ वै विधानं मन इष्यते ।
प्रधान इति नामास्य एतयोर्धर्म उच्यते ।
संधावतीति राजेन्द्र इत्येवमनुशुश्रुम ।
तस्य तत्संप्रवक्ष्यामि नव तांश्च निबोध मे ।
प्राकृतान्यस्य चत्वारि वैकृतानि तु पञ्च वै ।
पूर्वमुत्पद्यतेऽव्यक्ताद्व्यक्तो व्यक्तादिरुच्यते ।
प्राणानामादिमेवैतमाहुरध्यात्मचिन्तकाः ।
महानिति च नामास्य प्राहुर्वेदविपश्चितः ।
बुद्धिरित्यपरे राजन्विरिञ्चेति तथापरे ।
एतस्मात्खलु वैरिञ्चमुत्पद्यन्ति नराधिप ।
विरिञ्चाद्राजशार्दूल वैरिञ्चः सर्ग उच्यते ।
एकैकशो विरिञ्चो वै वैरिञ्चादुत्पन्नितः स्मृतः ।
एते सर्गा महाराज विद्याविद्येति नः श्रुतिः ।
वैरिञ्चात्पञ्च भूतानि वैरिञ्चानि नराधिप ।
उत्पद्यन्ते महाराज अहंकारादसंशयम् ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
पञ्च भूतविशेषाश्च युगपत्काशिनन्दन ।
वैरिञ्चो विषयार्थी तु जज्ञे भूतेषु पञ्चसु ।
मन इत्यभिदिश्येत विस्तराद्वैस्वरस्तथा ।
बुद्धीन्द्रियाणि राजेन्द्र तथा कर्मेन्द्रियाण्यपि ।
चतुरः प्राकृतान्सर्गान्युगपत्तान बुद्धिमान् ।
वैकृतान्पञ्च चैवाहुरध्यात्मकृतनिश्चयाः ।
त्वं चैवान्ये च राजेन्द्र तत्त्वबुद्धिविशारदाः ।
तिर्यक्सर्गं तथा मुख्य ऊर्ध्वोऽर्वाक्स्रोत एव च ।
पञ्चमोऽनुग्रहश्चैव नवैतान्विद्धि पार्थिव ।
एतद्धि सर्गनवकं सांख्ययोगनिदर्शनम् ।
मयेयमानुपूर्व्येण तत्त्वसंख्या च तेऽनघ ।
यश्च यस्मात्समुत्पन्नस्ततश्चैवानुवर्णितः ।
विकारादि मनः प्राहुस्त्रयाणां पञ्चकानि वै ।
भूतादीनां तु पञ्चानामाहुर्विस्वरमेव तु ।
प्राणापानसमानानामुदानव्यानयोश्च ह ।
विरिञ्चमाहुः प्राणादिं ब्राह्मणास्तत्त्वदर्शिनः ।
त्रयोविंशतितत्त्वानां व्यक्तानां नृपसत्तम ।
आदिमव्यक्तमित्याहुर्यथाश्रुतिनिदर्शनम् ।

इति ।

Colophon.

पञ्चशिख उवाच ।

एतद्धि मूर्तिसंघातं त्रैलोक्ये सर्वदेहिषु ।

---

( for बध्यामि ). — ( L. 31 ) $G_7$ यथातत्त्वेन ( for याथातथ्येन ). — ( L. 33 ) $G_7$ एतदर्थं ( for °मर्थं ). — ( L. 34 ) $G_7$ transp. तत्त्वं and श्रोतुं. — ( L. 35 ) $G_7$ पवित्रांगं ( for °त्राणां ). — ( L. 39 ) $G_7$ लोकाश्च ( for लोकांश्च ). — ( L. 46 ) $G_7$ अजा अमूर्तयश् ( for अजाश्चा° ). — ( L. 51 ) $G_7$ यदेतद् ( for यथैतद् ). — ( L. 53 ) $G_7$ वाचार्य- ( for चाचार्य- ). — ( L. 54 ) $G_7$ हि ( for ह ). — ( L. 55 ) $G_7$ महाभाग ( for °राज ). — ( L. 56 ) $G_7$ प्रधानं ( for वि° ). — ( L. 59 ) $G_7$ सर्वं ( for तत्सं- ). — ( L. 66 ) $G_7$ स वै सर्ग इहोच्यते ( for the post. half ). — ( L. 68 ) $G_7$ श्रुतं ( for श्रुतिः ). — ( L. 73 ) $G_7$ वैरिञ्चोपि विषयार्थी ( for the prior half ). — ( L. 74 ) $G_7$ वैखरं ( for °रस् ). — ( L. 76 ) $G_7$ बुद्धिमन् ( for °मान् ). — ( L. 78 ) $G_7$ एव ( for चैव ). — Colophon. *Adhy. name :* $M_5$ संयमनपृच्छ

आव्यक्तिकस्य सादृश्यं विरिञ्चस्य प्रजापतेः ।
व्यक्तस्याव्यक्तमित्याहुर्विश्वरूपस्य नः श्रुतिः ।
वेदितव्यो महाराज विश्वरूपः सनातनः ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
प्रवक्ष्यामि यथातत्त्वं तन्निबोध जनेश्वर ।

श्रोत्रमध्यात्मं शब्दोऽधिभूतमाकाशमधिदैवतम् । त्वगध्यात्मं स्पर्शोऽधिभूतं वायुरधिदैवतम् । वागध्यात्मं वक्तव्यमधिभूतमग्निरधिदैवतम् । घ्राणमध्यात्मं गन्धोऽधिभूतं पृथिव्यधिदैवतम् । पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतम् । हस्तावध्यात्मं कर्तव्यमधिभूतमिन्द्रोऽधिदैवतम् । पायुरध्यात्मं विसर्गोऽधिभूतं मित्रोऽधिदैवतम् । उपस्थोऽध्यात्ममानन्दोऽधिभूतं प्रजापतिरधिदैवतम् । मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधिदैवतम् । अहंकारोऽध्यात्ममभिमानोऽधिभूतं विरिञ्चोऽधिदैवतम् । बुद्धिरध्यात्मं बोद्धव्यमधिभूतं पुरुषोऽधिदैवतम् । एतदध्यात्ममधिभूतमधिदैवतं च सर्वं विज्ञातव्यम् ।

अनभिद्रोहेण ब्राह्मणेन्द्रे शुनि कीटे पतंगपुत्तिकादंशमशकेष्वित्येवं प्रयोक्तव्यं स्यात् ।

आत्मन्येवात्मलिङ्गे चैतस्याव्यक्तिकस्य महात्मिकस्याहंकारिकभौतिकवैकारिकेभ्यश्च कालज्ञानं पुरुषेभ्यो व्याख्यास्यामः । तदेतत्पर्यायशतसहस्रशः पञ्चशतं पञ्चाहोरात्रमपदिश्यते पञ्चानां पुरुषाणाम् । तत्रैकस्य प्रतिषिद्धमव्यक्तस्य चतुर्णां वक्ष्यन्त्याचार्याः । महदादीनां पर्यायशतसहस्राण्यशीतिमहोरात्रमपदिश्यते । प्राधानिकस्य महतश्चत्वारिंशत्पर्यायशतसहस्राण्यहोरात्रमपदिश्यते ।

आहंकारिकस्य भौतिकस्य पुरुषस्य पर्यायदशसहस्राण्यहोरात्रमपदिश्यते । वैकारिकस्य पुरुषस्य मनसः पर्यायमपि चतुर्युगम् । तदेतत्पर्यायशतसहस्राणि पञ्चाशतमव्यक्तस्याहोरात्रस्याकेवलस्य । एभ्यः पश्येन्नित्यं कालज्ञानम् । कालज्ञानेऽस्याव्यक्तस्याचेतनस्य ज्ञानविज्ञानमिति पश्यन्त्या बीजधर्मिणं बीजधर्मिणामप्रसवधर्मिणामप्रकृतिधर्मिणामप्रलयधर्मिणां प्रलयधर्मिणामिति ।

Colophon.

संयमन उवाच ।

भगवन्यदा खल्वग्निर्दारुशतसहस्रकोटिष्ववतिष्ठमानस्तत्स्थत्वान्नित्यं सहधर्मा स्यादेवं खल्वयं क्षेत्रसहस्रकोटिष्ववतिष्ठमानस्तत्स्थत्वान्नित्यं सहधर्मः स्यात् । यदि खल्वस्यानिष्टं क्षेत्रं सहधर्मित्वं स्यान्नायमिष्टानिष्टे प्रवर्तमानः प्रकृतिमनुवर्तेत गुणसर्गाय गुणसर्गेषु । यच्चानुवर्तमानस्य प्रकृतिसहधर्मित्वं स्याद्भवतु । न ह्यनिष्टगुणेनानुगम्यमानामभिष्वजत इत्यर्थमस्येष्टा प्रकृतिर्गुणांश्च ताननुवर्तते च । तदभिष्वजनादनुगमनाच्च तत्स्थत्वाच्च नित्यस्यानित्यमनुपश्यामः । तद्धेतुमात्रं वक्ष्यामः । कश्चिद्गुण्यगुणिना सार्धं समीयाय । समेत्य च कार्यंकारणं स कुर्वीत । तं च तथेष्टानिष्टे प्रवर्तमानं गुणिनमथागुणोऽनुवर्तते तत्स्थत्वात् । ननु सोऽपीष्टानिष्टवद्भवति तत्स्थत्वात् ।

यदि ह्ययमिष्टानिष्टव्यतिरिक्तः सद्भावो नायमिष्टानिष्टवत्त्वमित्यर्थमस्येष्टानिष्टस्वभावमिष्टं येनायमनुवर्तते चाभिष्वजते चेति । तदनुष्वजनादनुगमनाच्च कार्याकार्यकर्तृत्वमस्यानुपश्यामः । कार्याकार्यकर्तृत्वाच्चायमिष्टानिष्टवान्भवति ।

यदुक्तमिष्टानिष्टे नायमिति तन्मिथ्या । गुणवानयं क्षेत्रज्ञो नागुणवान् । यद्ययमगुणवान्स्याच्चायमिष्टानिष्टे प्रवर्तमानां प्रकृति-

(L. 92) G1 अव्यक्तिकस्य (for आ°). — (L. 93) G1 एव (for इति). — (L. 97) G1 आकाशो (for °शम्). — G1 om. (hapl.) from उपस्थो (in line 102) up to धिदैवतम् (in line 103). — (L. 106) G1 इति (for च). — (L. 107) G1 जनाभि- (for अनभि-). G1 ब्रह्मणींद्रे (for ब्राह्मणेन्द्रे). G1 -पतत्रिकादंश- (for -पुत्तिकादंश-). — (L. 108) G1 एव (for एवं). — (L. 109) G1 आत्मनैव (for °न्येव). G1 ममात्मिकाहंकारिक- (for महात्मिकस्या°). — (L. 111) G1 उपदिश्यते (for अप°). — (L. 112) G1 तंत्रैकस्य (for तत्रैकस्य). After चतुर्णां, G1 ins. वर्णानां. — (L. 113) G1 वक्ष्यामि (for वक्ष्यन्ति). G1 [आ]चार्याशीतिम् (for [अ]शीतिम्). — (L. 114) Before प्राधानिकस्य, G1 ins. वैकारिकस्य. — (L. 115) G1 अपदिश्यंते (for °श्यते). — (L. 117) G1 अपदिश्यंते (for °श्यते). G1 मासः (for मनसः). — (L. 118) G1 om. (hapl.) होरात्र. — (L. 119) G1 कालज्ञानस्य (for °ज्ञानेऽस्य). — (L. 120) G1 बीजधर्मिणा (for °धर्मिणं). — (L. 121) G1 प्रकृतिधर्मिणां प्रकृतिधर्मिणा (for अप्रसवधर्मिणामप्रकृतिधर्मिणाम्). G1 अप्रलयधार्मिणा (for °धर्मिणां). — Colophon. *Adhy. name:* M5 संयमनपृच्छा.

(L. 124) G1 सहधर्मी (for °धर्मा). — (L. 125) G1 om. यदि खलु. G1 यस्य (for अस्य). — (L. 129) G1 om. च. G1 अनुवर्तनाच् (for °गमनाच्). — (L. 131) G1 गुणस्त्वगुणिना (for गुण्यगुणिना). — (L. 132) G1 om. स. G1 गुणो (for [अ]गुणो). — (L. 134) G1 यद्यप्ययम् (for यदि ह्ययम्). G1 सता ह्यनायायमिष्टत्वभावमिष्टं (for सद्भावो नायमिष्टानिष्टवत्त्वमित्यर्थमस्येष्टानिष्टस्वभावमिष्टं). — (L. 137) G1 इष्टानिष्टवत्स्याद्भवति (for °निष्टवान्भवति). — (L. 138)

मनुवर्तेत धर्मिणीम्। तदनुवर्णितानि द्वंद्वस्य द्वंद्वधर्मित्वात्पश्यामः । तदनुपपन्नं स्याद्व्यतिरिक्तस्यातिरिक्तत्वमनिर्द्वंद्वस्य सद्वंद्वत्वं च पश्यस्य । आचार्य पश्य त्वं केवलस्याकेवलत्वं नित्यस्य चानित्यत्वं केवलस्याकेवलत्वं स्वातन्त्र्यं चास्य ।

पञ्चशिख उवाच ।

भोः संयमन यदेतदुक्तं भवता न वयमस्यैतदेवं गृह्णीमः। एकत्वमेवैतदुपदिष्टं भवता तत्र यन्नेष्टम्। संयोगं नित्यं जानीते सृज्यमानमसकृत्संहरमाणं च । गुणांस्तु गुणसंहरणमनुव्याख्यास्यामः । तद्यथा चत्वारो भूतग्रामा जरायुजाण्डजोद्भिदस्वेदजाः कालाग्निनाहंकारेणाप्रमेयप्रभावानुभावेन शतसहस्रांशुना दह्यमाना विघूर्णन्तोऽवशा भूमौ पतन्ति। ततस्तैर्भूतैर्हीना भूर्विवसना शुद्धा स्थण्डिला कूर्मपृष्ठनिभा बभूव। तां तथाभूतां जगज्जननीं जगतीमापो भुञ्जते। प्रणष्टा भूर्जलमेव स्यात्। जलमादित्यो रश्मिभिरादत्ते। समन्तादपां विनाशादग्निर्जाज्वल्यमानोऽन्तरिक्षचरान्भूतानुपयुज्याग्निर्जलमादत्ते। अग्निं च वायुः। विनष्टेऽग्नौ वायुरेवाग्निः स्यात्। स तदा सर्वप्राणभृतां प्राणानुपयुज्य वायुराकाशं स्यात्। आकाशं मनो मनोऽहंकारोऽहंकारं महान्सूर्यः सूयनात्। कृत्स्नस्य जगतः सर्वसूर्याणामेकीकृत्य लोकांस्त्रीन्नाशाय स्यान्महतस्तमसो मध्ये तिष्ठत्येकस्तमप्याददव्यक्तम्। तदेतत्पञ्चाहोरात्रिकं प्रलयं महाप्रलय इत्युच्यते। प्रलयान्महतस्तदेकत्वं प्रणष्टसर्वस्वं सर्वमूर्तिजालेश्वरविनाश्योदकं मूर्त्यैकं स्यात्। तदेतद्धव्यं कव्यं च प्रकरणाद्गुणतां कव्यमित्युच्यते स हरणाद्धव्यमिति। तदेतद्गुणवन्निर्गुणं गुणोपयोगाद्गुणकर्तृत्वाद्गुणीत्युच्यते बुधैः। क्रीडार्थमेवासकृत्सृजते च गुणान्। अनवबोधात्तदपरस्त्वहमेवैकः स्यान्नान्यः स्यादिति। यदि ह्येषावबुध्येतान्योऽस्ति मम वर इति न सृजेदुदासीनत्वाच्च सर्गसंहारयोरप्रसक्तिर्न भवेत्।

यदुक्तं भोः संयमन को विश्वं सृजते कृत्स्नमिदं संहरते चेति। यदप्युक्तं कश्च विश्वमधिष्ठाय निष्ठत्यग्निवद्दारुष्विति। पञ्चविंशकोऽन्योऽन्यस्याव्यक्तस्य त्रयोविंशतितत्त्वस्य चतुर्विंशकस्य द्रष्टा द्रष्टव्यस्य श्रोता श्रोतव्यस्य मन्ता मन्तव्यस्य बोद्धा बोद्धव्यस्याविष्ठाता वा। अनेनाधिष्ठिता प्रकृतिर्गुणान्संहरते च वर्तते। न चेतनेनाचेतना निर्गुणेन गुणिनीति पश्येनापश्येति शुद्धेनाशुद्धा नित्येनानित्या केवलेनाकेवला सर्गधर्मिण्यसर्गधर्मिणादर्शनधर्मिणा दर्शनधर्मिणी क्षेत्रधर्मिणाक्षेत्रदर्शनात्। कस्मात्। पृथक्त्वात्। पृथग्भावमस्य प्रपद्यतोऽनेकत्वं नेष्टं भवतः। प्रकृतिक्षेत्रज्ञयोरेकत्वमनवबोधदर्शनमेतदबुधानां दर्शनम्। न बुधा ह्येवमेतदनुपश्यन्ति पश्यापश्ययोरेकत्वम्। पश्यं पश्यन्तं दैवादन्य एव पश्यः। कस्मात्। शास्त्रदर्शनात्। शास्त्रदर्शनस्य चानवबोधादबुध इत्युच्यते बुधैः। बुधश्चायं क्षेत्रज्ञो बुद्ध्यादीन्गुणानभिवर्तमानाननुबुध्यते प्रकृतितः। तच्च बोद्धव्यम्। न त्वेवं प्रकृतिर्गुणान्क्षेत्रज्ञं वा। अनवबोधात्। यदि ह्येवं बुध्येरन्प्रकृतिर्वा गुणा वा बुद्धं बुद्धसहधर्मिणी स्यात्। भवेयुस्ते च। बुद्धोऽनुबुध्यति तमनुबुद्धत्वात्प्रकृतिरभिमन्यते। अहमेवास्य नान्यः स्यादिति। इष्टान्यभिष्वजतेऽऽत्मजानां यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहं भक्ष्याभक्ष्यं पेयापेयं वाच्यावाच्यमिति। गमनं संकोचनं प्रसारणं प्रियाप्रियं गम्यागम्यं शुभाशुभं शब्दस्पर्शरूपरसगन्धादीनां चावाप्तिरित्येवमादीन्गुणानुत्पादयत्यनवबोधात्। प्रकृतिरनुभूयते द्वंद्वत्वात्। तदनेकत्वमस्य क्षेत्रज्ञस्य प्रपद्यते। निर्द्वंद्वस्य चास्य प्रवर्तमानस्य पश्यत उत्पद्यतेऽहंकारकृतो दोषः स्यात्। अहमेनां प्रत्याचक्षेऽ-

---

G7 तत्कथं (for तन्). —(L. 140) G7 गुणधर्मी (for धर्मिणीम्). G7 -वर्तितानि (for -वर्णितानि). —(L 141) G7 तदुपपन्नः (for तदनुपपन्नं). G7 व्यतिरिक्तत्वम् (for व्यतिरिक्तस्यातिरिक्तत्वम्). —(L. 142) G7 असद्द्वंद्वत्वाच् (for सद्वंद्वत्वं). G7 का चास्य (for आचार्य). —(L. 143) G7 अनित्यत्वं (for चानि°). G7 केवलत्वं (for केवलस्याकेवलत्वं). —(L. 145) G7 यन्नेष्टः (for °ष्टम्). G7 संयोगान् (for संयोगं). —(L. 146) G7 सज्यमानम् (for सृज्य°). G7 संहारमनुवक्ष्यामः (for गुणसंहरणमनुव्याख्यास्यामः). —(L. 147) G7 जरायुजांडजोद्भिजाः (for °द्भिदस्वेदजाः). —(L. 153) G7 अंतरिक्षचरांश्च (for °चरान्). —(L. 154) G7 तं (for स). —(L. 155) G7 तथाहंकारं (for मनोऽहंकारोऽहंकारं). —(L. 156) G7 एकीकृत्वा (for °त्य). —(L. 157) G7 om. स्यान्. —(L. 160) G7 हव्यकव्यं (for हव्यं कव्यं). G7 कर्तव्यम् (for कव्यम्). G7 संहरणाद् (for स ह°). —(L. 161) G7 तं गुणवंतं (for गुणवन्). G7 गुणिनमुपदिश्यते (for गुणीत्युच्यते). —(L. 162) G7 क्रियामेवमेवासकृत् (for क्रीडार्थमेव). G7 नन्वनवबोधाद् (for अनव°). G7 अहमस्त्वहम् (for तदपरस्त्वहम्). —(L. 166) G7 यदुक्तं कश्चिद् (for यदप्युक्तं कश्च). —(L 167) G7 चतुर्विंशतिकस्य (for °विंशकस्य). —(L. 169) G7 om. च. —(L. 171) G7 सहधर्मिण्य- सहधर्मिणा. —(L. 173) G7 अस्याः (for अस्य). G7 प्रपद्यते नैकत्वं (for °तोऽनेकत्वं). —(L 174) G7 एव तद् (for एतद्). —(L. 175-176) G7 om. पश्यं पश्यन्तं दैवादन्य एव पश्यः. —(L. 177) G7 अबोधाद् (for चानवबोधाद्). —(L. 178) G7 अवबुध्यते (for अनु°). —(L. 179) G7 प्रकृतिं वा (for °तिर्गुणान्). G7 अनवबोधा अबुधस्य (sic) (for वा। अनवबोधात्). —(L. 181) G7 बुद्धामनु- (for बुद्धोऽनु-). M5 प्रकृतिं (for °तिर्). —(L. 182) G7 इष्टानिष्टानभिष्वजते सहजा (sic) (for इष्टान्यभिष्वजतेऽऽत्मजानां). —(L. 187) G7 om. चास्य. —(L. 188)

इमेनां बुध्यामीति । न चैषा पश्यत्याचक्षते मन्यते बुध्यते चाहंकारात् । यदि ह्यमिमन्येद्वाभिष्वजेद्वा । एवमनुबुद्धः स्यात् । अनुबन्धाच्च शक्तित्वं स्यात् । शक्तित्वाच्चास्य व्यतिरेकत्वं स्यात् । यदि ह्ययमिष्टानिष्टाभ्यां मध्यस्थः कथमस्येष्टानिष्टकृतो दोषः स्यात् । भवति निर्द्वंद्वत्वाच्चास्यालेपकत्वाच्चास्य व्यतिरेकत्वं स्यात् । भवतश्चात्र श्लोकौ यथा ।

पङ्कस्यापि हि दोषेण नोपलिप्यति पङ्कजम् ।
तथाव्यक्तस्य दोषेण नोपलिप्यति केवलः ।
केवलत्वं पृथग्भावात्पङ्कपङ्कजयोर्यथा ।
तथास्य सहभावत्वाद्विनाभाव इति स्मृतः ।

एवमस्य भो संयमन व्यतिरिक्तस्य व्यतिरिक्तत्वं भवति । असहभावमसहभावत्वाच्च । अन्यत्वमन्यत्वान्निस्तत्त्वमिति । अत्र श्लोका भवन्ति ।

घोरादगाधादव्यक्तादस्तमस्ततरं जनाः ।
प्रतीपभूतमन्यस्या मन्यन्ते तत्त्वबुद्धयः ।
ये त्वबुद्धास्तपोयोगादेकत्वं नानुपश्यति (sic) ।
ते व्यक्तनिष्ठादेकत्वाज्जायन्ते च म्रियन्ति च ।
निर्द्वंद्वधर्मिणो नित्यमत्यन्तं द्वंद्वधर्मिणा ।
अनित्याच्च महाराज द्वंद्वनिष्ठा भवन्ति ते ।
अश्रद्दधानाः शास्त्रस्य द्वैधीभावाच्च पार्थिव ।
कालस्यास्ये निमज्जन्ति उन्मज्जन्ति भवे नराः ।
अद्वैधात्तु भवेन्मोक्षो ह्यव्यक्तग्राहधर्मिणाम् ।
विमुच्यैतद्विमोक्षः स्यादविमोक्षात्पुनर्भवः ।

Colophon.

पञ्चशिख उवाच ।

भोः संयमन एवमन्योऽव्यक्तधर्मिणोऽप्यगुणो गुणधर्मिणोऽप्यचलश्चलधर्मिणोऽप्रकृतिः प्रकृतिधर्मिणः क्षेत्रज्ञः क्षेत्रधर्मिणो विमुक्तश्चाविमुक्ताद्विमलश्चाविमलाच्छुद्धोऽशुद्धाद्योगश्चावियोगान्मोक्षश्चाविमोक्षात् । एवं पुष्करपर्णस्थ इवाब्बिन्दुर्नित्यमसक्तस्तत्स्थत्वान्मशकोदुम्बरयोर्मत्स्योदकयोश्च यथाव्यक्तं भवति सहभावादेवमस्य क्षेत्रज्ञस्यान्यत्वं भवति । तदुच्यमाणस्य पश्येनापश्यस्य पश्यतश्चापश्यबुद्ध्याबुद्धस्य चेतनाचेतनस्य केवलाकेवलस्य नित्यानित्यस्य ज्ञानाज्ञानस्य । एवमस्य भोः अज्ञातस्याव्यक्तस्योपकरणं शोकादशोकं, मोहादमोहं, स्थिरात्स्थिरं, अभ्रादनभ्रं व्रणादव्रणं काजादकाजं सीमादसीमं पुरादपुरं पुरस्य चाप्यवदारणं पुरत्वमुपदिश्यते । लोकादलोकं कालादकालं भयादभयं शिवादशिवं विभुत्वाच्चाविभुत्वम् । एवमस्यानुपश्यतः खल्वव्यक्तमविजनमस्यैकत्वं परमनुपश्यतो नानात्वात्क्षेम्यादक्षेम्यः स्यादक्षेम्यादव्यक्तात् । भवन्ति चात्र श्लोकाः ।

क्षेम्याक्षेम्यं नानुपश्येत नित्यं
क्षेम्यस्त्वन्यस्तं तु नैवानुपश्येत् ।
षड्विंशो वा पञ्चविंशो नु राज-
न्नव्यक्तश्च प्राहुरेवं विधिज्ञाः ।
योऽयं बोद्धा पञ्चविंशः परस्य
स मन्यते ईदृशोऽस्मीति राजन् ।
बुद्धस्य वै बोधनात्तेन सम्य-
ग्गच्छत्ययं न चलो नाचलस्त्वम् ।
एवं बोद्धा केवलात्केवलः स-
न्स स्याद्व्यक्तः किं च संज्ञानसंज्ञः ।

---

G7 पश्यन् ( for पश्यत ). G7 आचक्षे ते ( for प्रत्याचक्ष ). —(L. 189) G7 चैष ( for चैषा ). G7 om. मन्यते. —(L. 190) G7 ह्ययं मन्येताभिषजेद्वा ( for ह्यभिमन्येद्वाभिष्वजेद्वा ). G7 अनुबंधः ( for °बुद्धः ). —(L. 192) G7 यद्वायम् ( for यदि ह्ययम् ). —(L. 194) G7 om. स्यात्. —(L. 199) After भवति, G7 ins. व्यतिरिक्तत्वात्. —(L. 202) G7 अस्तमं त्वजरं ( for अस्तमस्ततरं ). —(L. 203) G7 अन्यस्मान् ( for °स्या ). —(L. 204) G7 एकत्वेनानुपश्यतः ( for the post. half ). —(L. 205) G7 जायंति ( for जायन्ते ). —(L. 206) G7 अबोधाद् ( for अत्यन्तं ). —(L. 207) G7 अनित्यत्वान् ( for अनित्याच्च ). —(L. 210) G7 अव्यक्ताच्च ( for अद्वैधात्तु ). G7 ह्यप्येकग्राहधर्मिणा ( for the post. half ). —Colophon. *Adhy. name:* M5 संयमनपृच्छा.

(L. 212) G7 एवायमन्यो व्यक्तधर्मी ( for अन्योऽव्यक्तधर्मिणो ). —(L. 213) G7 [ऽ]क्षेत्रः ( for क्षेत्रज्ञः ). After क्षेत्रधर्मिणो, G7 ins. विमुक्तश्चाविमुक्तश्चेति। अशुचिनः प्रशुचिः. —(L. 214) G7 विमुक्तिश्चाविमुक्ताच्च ( for विमुक्तश्चाविमुक्ताद् ). G7 चाशुद्धाद्वियोगश् ( for ऽशुद्धाद्योगश् ). —(L. 216) G7 मत्स्योदकयो विन्मूषिकयोश्च (sic) ( for °दकयोश्च ). —(L. 218–219) G7 चेतनेनाचेतनस्य केवलेनाकेवलस्य नित्येनानित्यस्य ज्ञानेनाज्ञानस्य. —(L. 220–221) M5 शोकाशोकं मोहामोहं स्थिरास्थिरं. —(L. 222) G7 अपदिश्यते ( for उप° ). —(L. 224) G7 अनुपदेशतः ( for अनुपश्यतः ). G7 अविभक्तमविभाजनम् ( for अव्यक्तमविजनम् ). G7 अनुपदिश्यतो ( for अनुपश्यतो ). —(L. 225) G7 क्षेम्यः स्यादक्षेम्यः ( for क्षेम्यादक्षेम्यः ). G7 om. (hapl.) दक्षेम्या. —(L. 228) G7 नैवाभि- ( for नैवानु- ). —(L. 234) G7 न च लोकाद्बलत्वं ( for न चलो नाचलस्त्वम् ). —(L. 236) G7 स साव्यक्तः ( for स स्याद्व्यक्तः ). —(L. 238) G7 प्रभावं ( for

निर्द्वंद्वस्य द्वंद्वभावात्मकस्य
भावान्न स्यान्न प्रभावः शुचिः स्यात् ।
शुचिप्रबोधादशुचित्वं तदा स्या-
त्त्रिलोकसद्भावगुणप्रवर्तकम् ।
भवत्ययं केवल एव केवलः
समेत्य नित्याममलामलं शुचिम् ।

शुचिप्रबोधनस्य भोः संयमन बुध्यमानस्य पञ्चविंशस्य बुद्धात्षड्विंशबोधनत्वमुपदिशन्ति । बोद्धारं बुध्यमानस्य व्यतिरिक्तस्य व्यतिरिक्तत्वमुपपद्यते । केवलं नाहमस्याः कश्चिन्नेयं मम काचन षड्विंशस्याहमनेन मम सह चैकत्वमिति । तत्र श्लोकः ।

साम्यः साम्यं शुचिं दृष्ट्वा शुचिमाहुर्मनीषिणः ।
बहिः कृत्वा तमिस्रालमव्यक्ताच्चेतनं परम् ।

इति ।

तदेतद्भगवता बुद्धमवाप्य महत्तत्त्वं परमर्षिणा परमगुरुणा मम कपिलेन गुरुणा च ममासुरिणा जातिशतैर्बहुभिरवाप्तं कृत्स्नक्षयं कपिलात् । ममाप्येवमेव शिष्यदशकत्वमुपगम्य जातिशतैर्बहुभिरवाप्तं भगवत आसुरेः सकाशात् । मत्तश्च कात्यायनेनाप्तम् । गौतमेन कात्यायनादवाप्तम् । गौतमाच्च गार्ग्येणावाप्तम् । तदेतत्परंपरया बहुभिराचार्यैरवाप्तं कृत्स्नक्षयममृतार्थतत्त्वं विमलममलज्ञानम् । अत्यगाधमचेतनमकेवलमव्यक्तमपास्य नित्यं चेतनं केवलं ज्ञानं प्रतिबुद्धं बुध्यमानेन पञ्चविंशकेन षड्विंशकम् । अत्र श्लोका भवन्ति ।

सुतस्यैतद्वर्णितं मन्नियोगा-
द्वाराणस्यां क्रीडमानेन राज्ञा ।
तत्त्वज्ञानं पृच्छतः प्राञ्जलिः स्या-
त्पृच्छंस्तस्य ग्रन्थतश्चार्थतश्च ।
प्रोक्तं ह्येतत्षोडशप्रश्नमुग्रं
निस्तत्त्वाख्यं विंशत्षट्चैव राजन् ।
यं वै बुद्ध्वा बालकाय प्रणम्य
मूर्ध्नाभ्यर्णं पादयोर्हृष्यमाणः ।
पञ्चयां गतस्तत्त्वमवाप्य कृत्स्नं
सनत्कुमारादमृतं परं वै ।
सनत्कुमारेण ममोपदिष्ट-
मेतन्महद्ब्रह्म यथावदद्य ।
तत्ते श्रुतं तद्भव वीतशोक
एतं महाप्रश्नमवाप्य चार्थम् ।
तुल्यं भवान्पश्यतु ब्रह्मणश्चे-
दिन्द्रस्य स्थाणोर्मशकस्य चैव ।
पतंगकीटे शुनि च श्वपाके
सर्वं हि सर्वत्र नरेन्द्रसिंह ।
यस्त्वन्यथा पश्यति ह्यल्पबुद्धि-
रव्यक्तनिष्ठः स भवेत राजन् ।
सत्त्वस्य सर्वस्य ह्यपश्यमानो
अबुद्धिमान्दुःखमुपैति नित्यम् ।
न चास्य दुःखं स तु दुःखमेति
वैषम्यबुद्धित्वमवाप्य मोहात् ।
तद्गच्छ राजन्स्वपुरीं विशालां
वाराणसीमश्वरथेन शीघ्रम् ।
एतावदेतत्परमं रहस्य-
मुक्तं मया तेऽतिविधाय सर्वम् ।
ज्ञानी भवान्न त्वमबुद्धबुद्धि-
र्बुद्धिर्हि ते ज्यायसी राजसिंह ।
बुद्धं त्वयाग्र्यं परमं पवित्रं
षड्विंशकं पञ्चविंशात्परं यत् ।
न पञ्चविंशकात्पुनः प्रजायते नरोत्तमः
स यत्र तत्र संवसंस्त्रिवर्गविच्छुचिर्भवेत् ।

°वः ). — ( L. 242 ) G1 अमलामयं शुचिः ( for °मलं शुचिम् ). — ( L. 243 ) G1 -प्रबोधादस्य ( for -प्रबोधनस्य ). G1 -विंशकस्य ( for -विंशस्य ). — ( L. 246 ) G1 [अ]हमहं चास्यानेन ( for [अ]हमनेन ). — ( L 249 ) G1 अव्यक्ताच्चेतनः ( for °च्चेतनं ). — ( L. 251 ) G1 बंधम् ( for बुद्धम् ). G1 अहं ( for महत् ). — ( L. 253 ) G1 कृत्स्नं ( for कृत्स्नक्षयं ). G1 मया ( for मम ). G1 शिष्यदर्शत्वम् ( for °दशकत्वम् ). — ( L. 257 ) G1 अवत्यागाधमचेतनम् ( for अत्यगाधमचेतनम् ). — ( L 258 ) G1 अचेतनमज्ञानप्रतिबुद्धमव्यक्तं ( for नित्यं चेतनं केवलं ज्ञानं प्रतिबुद्धं ). — ( L. 260 ) G1 तस्यैवैतद्वार्णितमात्मयोगाद्. — ( L. 261 ) G1 राज्ञः ( for राज्ञा ). — ( L. 262 ) G1 प्रांजलेः ( for °लिः ). — ( L. 263 ) G1 पृच्छां तस्य ( for पृच्छंस्तस्य ). — ( L. 265 ) G1 निस्तत्त्वाः षड्विंशकश्चैव राजन्. — ( L. 267 ) G1 मूर्ध्नापन्नः ( for मूर्ध्नाभ्यर्णं ). G1 दृश्यमानः ( for हृष्यमाणः ). — ( L. 269 ) G1 परोत्सं ( for परं वै ). — ( L. 272 ) G1 transp. तत् and ते. — ( L. 273 ) G1 एतन् ( for एतं ). — ( L. 280 ) G1 अपश्यमाने ( for ह्यपश्यमानो ). — ( L 283 ) G1 अपश्यमानः ( for अवाप्य मोहात् ). — ( L. 287 ) G1 यतते नरोत्तम ( for ऽतिविधाय सर्वम् ). — G1 om. lines 288–292. — ( L 293 ) G1 om. भवेत्. — ( L 295 ) G1 अवबुध्यते ( for °बुध्यति ). — Colophon. *Adhy. name :* M5 संयमनपृच्छा समाप्ता.

शुचिर्हि पञ्चविंशकस्तथैव षाड्विंशक-
त्वमवबुध्यति यदा तदा शुचिर्भवेदिति ।

Colophon.

[ 29 E

$G_7$ $M_5$ cont.:

वैशंपायन उवाच ।

पुरा युधिष्ठिरो राजा प्रयतेनान्तरात्मना ।
द्वैपायनमृषिश्रेष्ठं पप्रच्छाथ कृताञ्जलिः ।
सहितो भ्रातृभिः सर्वैरुदारमतिभिः शुभैः ।
पृथिव्यामुपविष्टैस्तु विनीतैरुत्तमौजसैः ।
भगवान्सर्वभूतानां सर्वज्ञः सर्वदर्शिवान् ।
विश्रुतस्त्रिषु लोकेषु धर्मेण च दमेन च ।
तदिच्छाम उपश्रोतुं मङ्गल्यमृषिसत्तम ।
कथां भगवता प्रोक्तां सर्वपापप्रणाशिनीम् ।
वयं च यद्यनुग्राह्याः सर्वे भगवतो मताः ।
ब्रूहि सत्यवतां श्रेष्ठ शृणुमोपहिता वयम् ।
एवं संप्रश्रयादुक्तः सत्यात्मा सत्यवादिना ।
युधिष्ठिरेण सत्कृत्य कृष्णद्वैपायनोऽब्रवीत् ।
युधिष्ठिर महाप्राज्ञ कुरूणां वंशवर्धन ।
श्रोतुमिच्छसि कौन्तेय भ्रातृभिः सहितः शुभाम् ।
इमां कथामुपश्रुत्य नराणामर्थसिद्धये ।
विजयश्च नरेन्द्राणामिह पार्थ न दुर्लभः ।
शान्तिकी पौष्टिकी रक्षा सर्वदुःस्वप्ननाशिनी ।
कथेयममराकारा दैवतैरपि कथ्यते ।
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
बाल्येऽवाप्तं तु यद्वीर अगस्त्येन महात्मना ।
पुरा कृतयुगे राजन्महर्षिः कुम्भसंभवः ।
मित्रावरुणयोः पुत्रः श्रीमानतितपाः प्रभुः ।
स चाश्रमपदे पुण्ये पुण्यकर्मा महातपाः ।
समा द्वादशको राजन्वयसा भरतर्षभ ।
स्व आवसथ एकाकी ह्यभ्राकाशकृतव्रतः ।
मित्रावरुणयोः स्वर्गं गतयोः सुकृतात्मनोः ।
पुष्करस्योत्तरे तीरे सर्वदेवनमस्कृतः ।
पर्वतो भास्करो नाम भास्कराभः स्वतेजसा ।
अतः प्रभवते राजन्पुण्यस्रोता महानदी ।
वरदा वितमा नाम सिद्धचारणसेविता ।
तस्मिन्गिरिवरे तस्यागस्तेः पैतृक आश्रमः ।
पुण्यपुष्पफलोपेतैः पादपैरुपशोभितः ।
तप्यते शिशुरेकाकी तपो द्वादशवार्षिकम् ।
यत्र तप्तं पुरा वत्स दिव्यैरन्यैस्तपोधनैः ।
नेश्वरेण न चेन्द्रेण यमेन वरुणेन वा ।
नित्योर्ध्वबाहुरादित्यं भास्करे तस्थिवान्मुनिः ।
ऊर्ध्वमुखो निरालम्बो जितात्मा पवनोपमः ।
निरावृतो निरालम्बो नियतात्मा जितेन्द्रियः ।
निर्द्वंद्वो निरहंकारो निराशो निःस्पृहः क्वचित् ।
काष्ठभूतस्तपस्तेपे सर्वभूतहिते रतः ।
निर्वृतो निस्तमा धीरो निवृत्तः सर्वतः समः ।
तमेवमुपसंपन्नमुदारमनसं शुचिम् ।
भास्करे वर्तते नित्यं तप्यमानमतीव च ।
अवर्धत महापुण्ये स हि धर्मेण भारत ।
अथ कौन्तेय कालेन केनचिद्भरतर्षभ ।
अष्टाशीतिसहस्राणि यतीनां पुण्यकर्मणाम् ।
आनुपूर्व्येण यातानि महीं कृत्वा प्रदक्षिणम् ।
सपर्वतवनोद्देशां सनदीनदसागराम् ।
तत्र तत्र महापुण्याः पुण्यतीर्थाभिलाषिणः ।

Colophon.

द्वैपायन उवाच ।

एतस्मिन्नन्तरे पार्थ ऋषिसंघः स वै महान् ।
प्रदक्षिणं महीं कृत्वा भास्करं गिरिमभ्ययात् ।
ते तं गिरिवरं पुण्यमथ कृत्वा प्रदक्षिणम् ।
ततो गिरिनदीं पुण्यां तीर्थहेतोरुपागमन् ।
अष्टाशीतिसहस्राणि तत्र नद्यां युधिष्ठिर ।
विगाह्य तज्जलं राजन्प्रहृष्टा मुनयोऽभवन् ।
केचित्स्नस्नुर्यथाकामं केचिदत्र उपस्पृशन् ।
केचित्पुण्येन तोयेन पितृन्देवानतर्पयन् ।

---

(L. 2) $G_7$ [अ]धि- (for [अ]थ). —Before line 5, $G_7$ ins. युधिष्ठिरः; before line 11, वैशंपायनः; before line 13, व्यासः. —(L 20) $M_5$ बाल्यावाप्तं (for बाल्येऽवाप्तं). —(L. 25) $G_7$ तमावसथ (for स्व आवसथ). $G_7$ -कृतं व्रतं (for -कृतव्रतः). —(L 32) $G_7$ अभिसंवृतः (for उपशोभितः). —(L. 36) $G_7$ आदित्ये (for °त्यं). —(L. 37) $G_7$ ऊर्ध्वोन्मुखो (for ऊर्ध्वमुखो). $M_5$ नियतात्मा जितेंद्रियः (for the post. half). —(L. 41) $G_7$ निस्तमो (for °मा). —(L. 47) $G_7$ धर्मज्ञ (for यातानि). —Colophon. *Adhy. name:* $M_5$ अगस्त्यवर्धमानः.

(L. 56) $G_7$ उपाविशन् (for उपस्पृ°). —(L. 57) $G_7$ पितृदेवांश्च तर्पयन् (for the post. half). —(L.

केचित्प्रक्रीडितास्तत्र जपन्त्यन्ये तपोधनाः ।
अध्यात्मं चिन्तयन्त्यन्ये केचिद्वेदानधीयिरे ।
कथाः शुश्रुवुरन्ये च प्रोक्ता अन्यैस्तपोधनैः ।
ध्यानमन्ये ह्युपासन्त निषेदुश्च तथा परे ।
एवं तैर्ऋषिभिः सिद्धैर्वितमा पुण्यवर्धनी ।
नदी सा पुरुषव्याघ्र द्योतते तैस्तपोधनैः ।
एतस्मिन्नन्तरे पार्थ देवराजः पुरंदरः ।
पितामहं पुरस्कृत्य सह देवैः समेयिवान् ।
वितमायां तदेकान्ते तस्यां नद्यां युधिष्ठिर ।
अथाब्रवीत्पुष्करजः सुरेश्वरमरिंदमम् ।
विज्ञाय मुनिसंघस्य धर्मे रागमुपस्थितम् ।
पुरंदर महाबाहो सर्वथा श्रोतुमर्हसि ।
ऋषीणाममरश्रेष्ठ धर्मे रागमुपस्थितम् ।
इमं मुहूर्तमेतेषामहंकारः सुरेश्वर ।
प्रभविष्यति सर्वेषामस्वर्गीयो न संशयः ।
स भवान्देशमुत्सृज्य इमं सुरवरेश्वर ।
गन्तुमर्हसि धर्मात्मन्द्रष्टुमेतन्न ते क्षमम् ।
स ततस्तद्वचः श्रुत्वा देवराजः पितामहात् ।
जगाम भरतश्रेष्ठ सह देवैररिंदम ।
गते देवेश्वरे शक्रे पितामहपुरोगमे ।
अष्टाशीतिसहस्राणि परमं हर्षमभ्ययुः ।
ते प्रनृत्ताः प्रगीताश्च तथा प्रहसिता अपि ।
वितमाया जले पुण्ये तस्मिन्प्रक्रीडिताः परे ।
एकान्ते च महाप्राज्ञो नारदः कलहप्रियः ।
तन्त्रीयुक्तकमादाय मुनिर्वेदानधीतवान् ।
संवर्तोऽप्यथ कौन्तेय जलादुत्थाय भारत ।
उवाच तानृषीन्सर्वान्हर्षेण महता युतः ।
श्रूयतामृषिभिः सर्वैरिदं मम वचो द्विजाः ।
रोचते यदि सर्वेषां क्रियतां मुनिसत्तमाः ।
अहमुग्रतपा विप्रा भवन्तोऽपि तथैव च ।
न तुल्योऽस्मत्प्रभावेण धर्मेण च तथा परः ।
दीर्घकालप्रचीर्णस्य यमस्य नियमस्य च ।
तपोबलं न पश्यामि किमप्येतत्कथंचन ।
संवर्तवचनं श्रुत्वा सर्वं तदृषिमण्डलम् ।
अहंकारवशं प्राप्तं तद्वाक्यमभिनन्दति ।
अहंकृत्वा ततः सर्वे ऋषयः कुन्तिनन्दन ।
परस्परमवज्ञाय तत्र तेऽथामितौजसः ।
भृगुस्ततो महाराज सर्वर्षिगणपूजितः ।
संवर्तवचनं तत्र स सत्कृत्येदमब्रवीत् ।
एवमेतन्न संदेहो यत्त्वयोक्तं धृतव्रत ।
तस्मात्प्रभावं तपसो द्रष्टुमर्हाम सर्वशः ।
ऋषयः श्रूयतां तावन्मम वाक्यं धृतव्रताः ।
अहं शुचिरहं श्रेष्ठः अहमुग्रतपोधनः ।
अहं प्रधान इत्येवं यज्जल्पथ तपोधनाः ।
किमेतत्कथयित्वा वो ह्यहंकारात्पुनः पुनः ।
प्रत्यक्षं द्रष्टुमिच्छाम इह धर्मस्य नः फलम् ।
न तपो विद्यते यत्र सर्वभूतेष्वसंशयम् ।
उपस्पृश्य ततस्तोयं पुनरभ्युपगम्यताम् ।
दृश्यतां सुप्रतप्तस्य धर्मस्य महतः फलम् ।
यत्र येन तपस्तप्तं तथा दशदशात्मकम् ।
तद्दर्शयध्वं संगम्य तपो यस्य यथा कृतम् ।
ततो भृगुवचः श्रुत्वा सर्वं तदृषिमण्डलम् ।
भृगोर्वचः पुरस्कृत्य तथेत्यूचुर्महर्षयः ।
ते तु क्रोधादहंकारं प्राप्य सर्वे महर्षयः ।
नदीं तां वितमां पुण्यामुपस्प्रष्टुं विचक्रमुः ।
ते तत्र भ्रष्टतपसो वितमायां जलं शुभम् ।
उपस्पृश्य महाराज जप्यमावर्तयंस्तदा ।
ततस्तद्गगनं रुद्धं सर्वैस्तैर्ऋषिसत्तमैः ।
तपोबलं नरश्रेष्ठ दर्शयद्भिरसंशयम् ।
कश्चिदाकाशमाविश्य ज्वलद्धर्मेण केवलम् ।
अप्सरोभिस्तथा चान्ये पूताः स्वर्गगता द्विजाः ।
पुष्पवर्षैस्तथा चान्यैः पूज्यन्ते गुह्यकैरपि ।
केचिदाकाशमाविश्य दिव्यां चेष्टामकुर्वत ।
तथासीत्सुमहान्नादो हर्षात्तेषामरिंदम ।
अन्योन्यं पश्यतां तत्र हसतां च युधिष्ठिर ।
ते दृष्ट्वा बलमन्योन्यं धर्मस्य भरतर्षभ ।

59 ) G1 अधीयते ( for °यिरे ). —( L. 62 ) G1 ते ( for तैर् ). —( L. 74 ) G1 एषां ( for एतन् ). —( L. 75 ) G1 ततस्तु ( for स ततस् ). —( L. 82 ) G1 वेदम् ( for वेदान् ). —Before line 85, G1 ins. संवर्तः. —( L. 88 ) G1 धर्मे न ( for धर्मेण ). — Before line 91, G1 ins. व्यासः. —( L. 92 ) G1 अभिनंदत ( for °नन्दति ). —Before line 97, G1 ins. भृगुः. Before line 109, G1 ins. व्यासः. —( L. 112 ) G1 प्रचक्रमुः ( for विच° ). —( L. 113 ) G1 च प्रनष्ट- ( for तत्र भ्रष्ट- ). —( L. 118 ) G1 चान्यैर् ( for चान्ये ). G1 वृत्ताः ( for पूताः ). —( L. 121 ) G1 दोषो ( for नादो ). —( L. 125 ) G1 दृष्ट्वा च ( for तु दृष्ट्वा ). —( L. 132 )

तदेवं कथयन्तस्ते तीरे नद्यास्तथा विभो ।
तं तु दृष्ट्वा विदित्वा च धर्मलोपं महात्मनाम् ।
नारदः कुरुशार्दूल घट्टयंस्तन्त्रियुक्तकम् ।
अथ ते ऋषयः सर्वे गन्तुकामा नभस्तलम् ।
यथापूर्वममित्रघ्न अशक्ता गमनाय हि ।
अष्टाशीतिसहस्राणि मुनीनां भावितात्मनाम् ।
अशक्ता गमने राजंस्ततोऽन्योन्यमपश्यत ।
ते निरस्ता निरुत्साहा निराशा गमनं प्रति ।
तत्रैवासन्महाभाग भ्रष्टपक्षाः खगा इव ।
परस्परमुदैक्षन्त एवमुक्त्वा महर्षयः ।
किमिदं किं न्विदमिति धिक्कष्टमिति चापरे ।
ते वीक्षमाणाः कृपणाः स्वर्गे विगतचेतसः ।
अहंकारेण महता वसुधायां निपातिताः ।
मोहस्य वशमागम्य सर्व एव विचेतसः ।
न किंचिदभिजानन्ति धर्मस्य गमनस्य वा ।
यदा विमनसः सर्वे खगाः खात्पतिता इव ।
अथैतान्नारदोवाच हर्षादिदमथो वचः ।
किमुदीक्षथ मोहस्था नाकपृष्ठं यियासवः ।
दुर्लभोऽयं गुणो भूयो भवतां नष्टधर्मिणाम् ।
अहंकारेण महता नष्टो धर्मः सनातनः ।
एवं गते न पश्यामि स्वर्गं गन्तुं यथा पुरा ।
एते स्थ ऋषयः सर्वे पक्षहीनाः खगा इव ।
तेन धर्मातिलोपेन चिन्तितेन दुरात्मना ।
एते स्थ सर्वे संवृत्ता निराशा गमनं प्रति ।
नद्यास्तीरे शुभे पुण्ये धर्मं कुरुत यत्नतः ।

Colophon.

द्वैपायन उवाच ।

तस्य तद्वचनं श्रुत्वा ऋषयो दीनचेतसः ।
तं नारदमृषिश्रेष्ठं प्रह्वा भूत्वाथ तेऽब्रुवन् ।
पुनरस्मद्विधैर्भूयो नाकपृष्ठं तपोधन ।
अधिष्ठातुं कथं वापि न भवेद्धर्मसंकरः ।
तेषां तु वचनं श्रुत्वा नारदः पुनरब्रवीत् ।
मुहूर्तं ध्यानमास्थाय योगमागम्य वै शुभम् ।
अहंकारस्य जानीध्वमृषयो दारुणं बलम् ।
किमाशास्य तु पापस्य कर्मणश्चरितस्य वै ।
अहो फलमनार्यस्य दुष्कृतस्य महत्त्विदम् ।
यदेवं प्राप्यते दोषस्त्वहंकारो महर्षिभिः ।
क तद्वर्षसहस्राणि तप्तस्य तपसः फलम् ।
क तन्नष्टं पुरा त्विष्टं नियमः क च वै दमः ।
यदूर्ध्वबाहुभिः शान्तैः क नु तस्य फलं गतम् ।
यदर्थं चार्चिता देवाः पितरश्च तपोधनाः ।
क नु तस्य फलं विप्राः तपसोऽभ्यस्य वै गतम् ।
एते कर्तव्यधर्माः स्थ पुनरेव यथा पुरा ।
एवं गते न पश्यामि गमनं वह्निविष्टपम् ।
अहंकारप्रभावेण तेन संशयिता गतिः ।
अहमप्यनुगन्ता वै केवलेन तु कर्मणा ।
अनेन कारणेनास्ममेवं संशयमात्मनि ।
तदियं प्रवरस्रोता नदी पुण्यजला शुभा ।
कर्तव्यो धर्म इह तु यदि नास्ति नभोगतिः ।
वायुभक्षा निराहारा नियता विजितेन्द्रियाः ।
इह धर्मं सुनिभृता भवन्तः कर्तुमर्हथ ।
इह देवेश्वरेणापि वासवेन महात्मना ।
धर्म उग्रः सुचरितो वितमायाः पुरोपरि ।
इह देवेन देव्या च रुद्रेण सुमहत्तपः ।
तप्तं वर्षसहस्राणि दिव्येन विधिना पुरा ।
इमां सरिद्वरां प्राप्य विष्णुनापि महात्मना ।
शुभं जलमुपस्पृश्य प्राप्तो दुस्तरसंक्षयः ।
एष प्रभावो धर्मज्ञा नद्या अस्या न संशयः ।
चरित्वेह ततः पुण्यं गमिष्यथ शुभां गतिम् ।
यदा विमनसः सर्वे परं दैन्यमुपागताः ।
सर्व एव महात्मानः ततस्तान्नारदोऽब्रवीत् ।
दैन्यमेतत्परित्यज्य सर्वकार्यावसादकम् ।
श्रोतुमर्हथ वै सर्वे प्रयतेनान्तरात्मना ।

---

G7 महाभागा ( for °भाग ). — G7 om. line 133. — ( L. 135 ) G7 एवमुक्त्वा वीक्षमाणाः ( for the prior half ). — ( L. 138 ) G7 गमनाय ( for °नस्य ). — Before line 141, G7 ins. नारदः. — ( L. 141 ) G7 उद्वीक्षथ ( for उदी° ). M5 इयासवः ( for यि° ). — Colophon. *Adhy. name :* M5 अगस्त्यवर्धमानः.

( L. 149 ) G7 दिव्य- ( for दीन- ). — Before line 151, G7 ins. ऋषयः. Before line 153, G7 ins. व्यासः and before 154, नारदः. — ( L. 158 ) G7 अहंकारो ( for त्वहं° ). — ( L. 159 ) G7 किं ( for क ). — ( L. 160 ) G7 कृतं नष्टं ( for क तन्नष्टं ). — ( L. 163 ) G7 तपसोत्र तु वै गतं ( for the post. half ). — ( L. 167 ) G7 केवलं न ( for केवलेन ). — ( L. 168 ) G7 अहम् ( for आस्मम् ). — Before line 181, G7 ins. व्यासः. — ( L. 182 ) G7 सर्वानेव

यच्च वक्ष्यामि तत्कार्यं भवद्भिः कार्यसाधनम् ।
सर्वथा मानमुत्सृज्य विनयेन दमेन च ।
यदिदं वचनं मेऽद्य करिष्यथ तपोधनाः ।
इदं मुहूर्तमाकाशं यथापूर्वं गमिष्यथ ।
यदि मद्वचनं सर्वे यथोक्तमनुतिष्ठथ ।
अस्मिन्मुहूर्ते सर्वेषां कल्मषं नाशमेष्यति ।
अनृतं नोक्तपूर्वं मे मुनिरस्मि धृतव्रताः ।
मद्वचः श्रूयतां साधु नारदोऽस्मि तपोधनाः ।
धर्मो वस्त्यक्तमानानां स्वर्गश्चैव भविष्यति ।
इदं मुहूर्तं सर्वेषां मद्वाक्यं परिगृह्य तु ।
भावज्ञेयानि धर्म्याणि वाक्यानि सुहृदां सदा ।
क्रियतामविचारेण ममेदं वचनं हितम् ।
संवर्तस्य हितार्थाय यथावदिह लप्स्यथ ।
कथयिष्यामि वः सम्यक्सर्वेषामेव साधुषु ।
श्रुत्वा क्षमाक्षमं ज्ञात्वा यद्धितं तत्करिष्यथ ।
शाश्वतं च ध्रुवं चैव यथास्थानं गमिष्यथ ।

Colophon.

द्वैपायन उवाच ।

ते तस्य वचनं श्रुत्वा तदा ऋषिवरा नृप ।
हर्षेणोत्फुल्लनयनाः सर्व एव तदाभवन् ।
तं भृगुः प्रयतो भूत्वा देवर्षिं नारदं तदा ।
उवाच पुरुषश्रेष्ठ विस्मयाद्रुचिरं वचः ।
किं नु तद्दैवतं ब्रह्मन्व्रतं वा नियमोऽपि वा ।
यत्कृत्वा खेचरश्रेष्ठ नाकपृष्ठं लभेमहि ।
सर्वथा नैतदाश्चर्यं देवर्षे तव यन्मतम् ।
अस्माकमनुकम्पार्थं यत्त्वं वदसि धार्मिक ।
ततो वद हितं वाक्यं पापमेतत्प्रमार्जितम् ।
को वा स नियमो विप्र समाधेयो हि नः पुनः ।
तदेते वै वयं सर्वे ऋषयो मुनिसत्तम ।
बद्धाञ्जलिपुटाः प्रह्वास्तव साधो प्रसादने ।
तत्तु धर्मात्मनः श्रुत्वा भृगोर्वाक्यं महायशाः ।
कृताञ्जलिपुटांस्तांश्च ऋषीन्दृष्ट्वा महामुनिः ।
ततः प्रहस्य तद्वाक्यं नारदो मुनिसत्तमः ।
सर्वानेव समासीनानिदं वचनमब्रवीत् ।
हन्त वः कथयिष्यामि सर्व एव निबोधत ।
क्षमं चाप्यनुकूलं च स्वर्गाय च हिताय च ।
एष शैलवरे बालो मित्रावरुणसंभवः ।
अगस्त्यो नाम धर्मात्मा भास्करे तप आस्थितः ।
धैर्येण तपसा चैव धर्मेण च दमेन च ।
न तुल्यो विद्यते यस्य सर्वेषां भवतामपि ।
तं बालमुग्रतपसं धर्मात्मानमनिन्दितम् ।
अभिगच्छत संहृत्य ऋषयो मानमात्मनः ।
यदि मानं च मोहं च त्यक्त्वा दर्पं च केवलम् ।
अभिगच्छत तं बालं गमिष्यथ यथा पुरा ।
स ह्यर्क इव तेजस्वी भास्करे पर्वतोत्तमे ।
तपश्चरति लोकस्य स्वस्तिहेतोर्धृतव्रतः ।
न तुल्यस्तेजसा तस्य धर्मेण च दमेन च ।
उपतिष्ठत तं सर्वे वरदं मुनिपुंगवम् ।
ततस्तस्य वचः श्रुत्वा नारदस्य महात्मनः ।
हृष्टेन मनसा सर्वे तस्य वाक्यमधिष्ठिताः ।
नारदं ते तथेत्युक्त्वा सर्वे कृत्वा प्रदक्षिणम् ।
प्रसन्नमनसो वीर जग्मुस्ते भास्करं गिरिम् ।
ते तं गिरिवरं पुण्यं सर्वकालफलद्रुमम् ।
अधिरुह्य यतात्मानः सर्वतः प्रत्यलोकयन् ।
स तु पर्वतराजस्य भास्करस्यांशुमानिव ।
उपर्युपरि धर्मात्मा चरत्युग्रं तपः शुचिः ।
तं दृष्ट्वा विस्मिताः सर्वे ऋषयः शत्रुसूदन ।
तस्मान्नातर्कयंस्ते तद्यदुक्तं नारदेन वै ।
ततस्त्वभिगताः सर्वे तं बालमृषिसत्तमाः ।
अष्टाशीतिसहस्राणि प्रयतानि यतानि च ।
सर्वेषां वचनात्तेषां भृगुस्तत्र यतव्रतः ।
अब्रवीत्तं महात्मानं दीप्यमानः स्वतेजसा ।
अगस्त्य श्रेष्ठ साधूनां नित्यं सुचरितव्रत ।

---

(for सर्व एव). — Before line 183, G7 ins. नारदः. — (L. 184) G7 ते (for वै). — (L. 192) G7 तद्वचः (for मद्वचः). G7 धृतव्रताः (for तपोधनाः). — (L. 195) G7 भावश्रेयांसि (for °ज्ञेयानि). — Colophon. *Adhy. name:* M5 अगस्त्यवर्धमानः.

Before line 205, G7 ins. भृगुः. — (L. 205) G7 ब्रह्म (for ब्रह्मन्). — (L. 206) G7 च मुनिश्रेष्ठ (for खेचर°). — (L. 207) G7 सर्वदा (for °था). — (L. 212) G7 तपसा यो प्रसादने (sic) (for the post. half). — Before line 213, G7 ins. व्यासः. Before line 217, G7 ins. नारदः. — (L. 218) M5 क्षयं (for क्षमं). — (L. 224) G7 संत्यज्य (for संहृत्य). — (L. 228) G7 धूर्तं वचः (for धृतव्रतः). — Before line 231, G7 ins. व्यासः. — (L. 241) G7 त्वधिगताः (for त्वभि°). — (L. 244) G7 दीप्यमानं (for

श्रोतुमर्हसि धर्मज्ञ वचो मुनिवरात्मज ।
वयं दैवतसृष्टेन अहंकारेण मोहिताः ।
दममुत्सृज्य धर्मेण रागस्पृष्टा विमोहिताः ।
भवत्प्रसादादिच्छामो गन्तुमिष्टां शुभां गतिम् ।
अहंकाराग्निदग्धानां सर्वेषां शरणं भव ।
अष्टाशीतिसहस्राणि मोक्षयित्वा भवानिमान् ।
कल्मषादतिधर्मेण शश्वल्लोकानवाप्स्यसि ।
दानेनानेन धर्मस्य महर्षे मुनिसत्तम ।
आत्मानं च पितॄंश्चैव जीवलोकं च तारय ।
वयं त्वा प्रयताः सर्वे स्वर्गहेतोरुपस्थिताः ।
अष्टाशीतिसहस्राणि तारयेमानि तेजसा ।
वयं त्वमिगताः सर्वे भवतः स्वर्गकाङ्क्षिणः ।
आशया त्वत्सकाशाच्च काङ्क्षमाणाः शिवं पदम् ।
यथार्थं कुरु धर्मज्ञ ऋषीणामिह चागमम् ।
अर्हसे तेजसा स्वेन रक्षितुं शरणागतान् ।

Colophon.

द्वैपायन उवाच ।

स तानृषिगणान्दृष्ट्वा अगस्त्यः शरणागतान् ।
बद्धाञ्जलिपुटान्सर्वान्प्रहृष्टवदनोऽभवत् ।
प्रत्यर्चयित्वा सर्वान्वै विनयेनोपगम्य च ।
कृताञ्जलिरुवाचेदं सर्वान्स ऋषिसत्तमान् ।
सुस्वागतं वो भवतु साधूनां सर्वशस्त्विह ।
स्वमाश्रमपदं तावदृषीणां भवतामिदम् ।
ततस्तेष्वर्हतः कृत्वा स चातिथिविधिं द्विजः ।
उपविश्य यथान्यायं प्रश्रयावनतः स्थितः ।
अगस्त्यस्तांस्ततः सर्वान्कृताञ्जलिरभाषत ।
नमो भगवतामस्तु सर्वेषामेव वः समम् ।
पुत्रोऽहं भवतां साधु शिष्यो वा प्रणतोऽब्रुवम् ।
का शक्तिर्मम बालस्य मुनेरकृतकर्मणः ।
भवतामभयं दातुं स्वर्गं प्रापयितुं तथा ।
मुनेः कर्तव्यधर्मोऽयं केवलं किंचिदेव हि ।
नाम धर्म इति श्रुत्वा किंचिन्नियमवानहम् ।
कुतो धर्मः कुतः पुण्यं कुतो दानं कुतो दमः ।
येन दद्यामहं धर्मं भवतां स्वर्गकाङ्क्षिणाम् ।
प्रसीदत न मे रोषं यूयं वै कर्तुमर्हथ ।
संभावयामि नात्मानं येन दद्यामहोऽभयम् ।
तदेतद्वचनं श्रुत्वा मुनेस्तस्य महात्मनः ।
चक्रुस्ते गमने बुद्धिं तामेव वितमां तदा ।
ततस्त्वगस्त्यः सहसा तानुवाच धृतव्रतः ।
अष्टाशीतिसहस्राणि ऋषीणां भावितात्मनाम् ।
शिरस्यञ्जलिना बालः प्रणम्य शिरसा ह्यपि ।
इदं वचनमिष्टात्मा सर्वानेव तदाब्रवीत् ।
न गन्तव्यमलं तावत्सर्वैर्ऋषिगणैरितः ।
दास्यामि यदि शक्ष्यामि स्वर्गीयं भवतां वचः ।
गमिष्यथ यथापूर्वं यदि धर्मो भविष्यति ।
मुहूर्तं स्थीयतां तावद्यावत्तावदुपस्पृशे ।
स गत्वा वितमां पुण्यामृषिस्त्वरितमात्मवान् ।
यथाविधि उपस्पृश्य ततस्त्वभ्याजगाम ह ।
ततः पूर्वां दिशं धीमानधिष्ठाय कृताञ्जलिः ।
हृष्टेन मनसोवाच स्थितो ह्यूर्ध्वमुदङ्मुखः ।
यद्यस्ति सुकृतं किंचिद्देवता वा सुपूजिताः ।
अष्टाशीतिसहस्राणि यान्त्वेतानि यथा पुरा ।
ध्रुवाय चास्तु सर्वेषां स्वर्गे स्थानं महात्मनाम् ।
मम सत्येन तपसा नियमेन दमेन च ।
एतस्य वचनस्यान्ते ततस्तु भरतर्षभ ।
अष्टाशीतिसहस्राणि मुनीनां पुण्यकर्मणाम् ।
स्वर्गमारुरुहुस्तानि मुदितानि यथा पुरा ।
वचनं श्रूयते तत्र साधु साध्वित्यनन्तरम् ।
साधु पुत्र सुपुत्रस्त्वं मित्रस्य सुधृतव्रत ।
साधु सत्त्ववतां श्रेष्ठ साधु सत्यवतां वर ।
साधु दानमिदं पुण्यं साधु ब्रह्मण्यता च ते ।

---

°मानः). — Before line 245, $G_1$ ins. भृगुः. — (L. 247) $G_1$ -दृष्टेन (for -सृ°). $G_1$ लंघिताः (for मोहिताः). — (L. 255) $G_1$ त्वां (for त्वा). — (L. 258) $M_5$ शिवः (for शिवं). — (L. 260) $G_1$ तेन (for स्वेन). — Colophon. *Adhy. name:* $M_5$ अगस्त्यवर्धमानः.

(L. 263) $G_1$ तु (for च). — Before line 265, $G_1$ ins. अगस्त्यः. — (L. 266) $G_1$ भावितात्मनां (for भवतामिदम्). — Before line 267, $G_1$ ins. द्वैपायनः. Before line 270, $G_1$ ins. अगस्त्यः, and before 280, व्यासः. Before line 286, $G_1$ ins. अगस्त्यः. Before line 290, $G_1$ ins. व्यासः. — (L. 291) $G_1$ यथाविधिर् (for °विधि). — Before line 294, $G_1$ ins. अगस्त्यः, and before line 298, व्यासः. — (L. 298) $G_1$ ते (for तु). — $G_1$ om. line 300. Before line 302, $G_1$ ins. ऋषयः. — (L. 302) $G_1$ वरुणस्य च (for सुधृतव्रत). — Before line 307, $G_1$ ins. व्यासः. — (L. 308)

त्वत्प्रसादाद्वयं सर्वे नाकपृष्ठमिदं क्षणात् ।
प्राप्तवन्तो यथापूर्वमहो दानं तवाक्षयम् ।
नेदुर्दुन्दुभयः स्वर्गे अहो दानफलस्य वै ।
घुष्यते चाप्यहो दानं त्रिभिर्लोकैर्महामुने ।
देवा महोरगा यक्षा गन्धर्वाः सिद्धचारणाः ।
अगस्त्यं पुरुषश्रेष्ठं पुष्पवर्षैरवाकिरन् ।
गन्धर्वा गीतघोषेण विचित्रैर्वादितैस्तथा ।
अहो दानं घोषयन्तो अगस्त्यं पूजयन्ति वै ।
ऊर्वशी मेनका रम्भा श्यामा काली तथैव च ।
रामा योजनगन्धा च गन्धकाली तथैव च ।
वराप्सरा ह्यनृत्यन्त अगस्त्यं भरतर्षभ ।
अहो दानं घोषयन्ति शतशश्चैव मानद ।
मनोरमं सुसंहृष्टा देवगन्धर्वपन्नगाः ।
घोषयन्तो महानादमगस्तेर्मुदितास्तदा ।
तिष्ठन्त्यभिमुखाः स्वर्गं साधु साध्वित्यथोऽब्रुवन् ।
ध्रुवं ते चाप्यहो दानं तस्य लोकास्त्रयस्तदा ।
दिव्यपुष्पधरा मेघाः सर्वतः समुपस्थिताः ।
ववृषुः पुष्पवर्षाणि अगस्त्यस्याश्रमं प्रति ।
एवं तदा महाराज अगस्तेः साधुवादिनः ।
घुष्यते चाप्यहो दानं सर्वतो भरतर्षभ ।

Colophon.

द्वैपायन उवाच ।

अहो दाने घुष्यमाणे ब्रह्मर्षेस्तस्य वै तदा ।
नारदः परमाश्चर्यमद्भुतं प्रतिवीक्ष्य तत् ।
स तस्माद्धितमातीरादुत्थाय मुनिपुंगवः ।
हर्षेण महता युक्तो भास्करं गिरिमारुहत् ।
सोऽधिरुह्य महाप्राज्ञ पश्यते बालकं मुनिम् ।
निर्विकारं तदासीनं धैर्येण महतान्वितम् ।
तं दृष्ट्वा नारदो बालमगस्त्यं मुनिसत्तमम् ।
देवर्षिर्वर्धयामास हर्षादमरसंनिभम् ।
दिष्ट्या वर्धसि धर्मज्ञ ध्रुवाय मुनिसत्तम ।
भवता विजिता लोका हितकाम महामुने ।
अष्टाशीतिसहस्राणि प्रापयित्वा नभस्तलम् ।
तदेतद्भवतावाप्तं महादानं महोदयम् ।
नैतदिन्द्रादिभिर्देवैरवाप्तमृषिभिर्न च ।
यत्त्वयाद्य महाप्राज्ञ प्राप्तं बालेन केवलम् ।
स्वर्गीयमेतद्धर्मज्ञ ध्रुवाय मुनिसत्तम ।
भवता विजिता लोकाः सर्वलोकहितैषिणा ।
कर्तव्यो बहुलश्चैव त्वया धर्मो ह्यसंशयम् ।
भवानस्मिन्युगे पूर्वे ऋषिरेको गुणैः स्मृतः ।
भविष्यसि महाप्राज्ञ ध्रुवः शाश्वत अव्ययः ।
तस्य तद्वचनं श्रुत्वा नारदस्य महात्मनः ।
अभिवाद्य यथान्यायमिदं वचनमब्रवीत् ।
भगवन्केवलं बाल्यादवाप्तं तपसा विभो ।
मयाद्य कथमप्युक्तं कृते तेषां महात्मनाम् ।
ते गताः सहसा सर्वे वचनान्मम नारद ।
नाकपृष्ठं महात्मानः स हि धर्मः समार्जितः ।
अगस्त्यवचनं श्रुत्वा नारदो भरतर्षभ ।
उवाच परमप्रीतस्तद्वाक्यमभिपूजयन् ।
किं नाम बुध्यसेऽऽत्मानमगस्ते पूर्वनिर्जितान् ।
लोकांस्त्वया महाप्राज्ञ धर्मेण महता चिरम् ।
भवानेको मुनिः पूर्वं वृषभो नाम नामतः ।
यदा च वर्षकोटी वै युगमासीन्महाव्रत ।
दिव्यसंकल्पकं नाम पूर्वकल्पे कृते युगे ।
यदा द्वीपान्समुद्रांश्च पर्वतांश्च वनानि च ।
विष्णुः संकल्पयामास सहितः पद्मयोनिना ।
तदापि हि भवाञ्जातः सलिलाद्धि स्वयं प्रभो ।
पुष्कराच्च यथा ब्रह्मा यथा तोयाच्च पावकः ।
तथा त्वमपि धर्मज्ञ स्वयंभूः सलिलोद्भवः ।
एवं हि कथयामास वरदः पद्मसंभवः ।

---

M5 पुष्यते ( for घुष्यते ). G7 महामुनेः ( for °मुने ). — ( L. 315 ) G7 वराप्सरसोनृत्यंत ( for the prior half ). G7 पुरुषर्षभ ( for भरत° ). — ( L. 319 ) G7 अभिगताः ( for °मुखाः ). — ( L. 321 ) M5 संवृतः ( for सर्वतः ). — ( L. 323 ) G7 अगस्त्ये ( for °स्तेः ). — Colophon. *Adhy. name :* M5 अगस्त्यवर्धमानः.

( L. 325 ) G7 तस्मिन् ( for अहो ). — ( L. 326 ) G7 तु ( for तत् ). — ( L. 329 ) G7 महाप्राज्ञः ( for °प्राज्ञ ). — Before line 333, G7 ins. नारदः. — ( L. 333 ) M5 om. धर्मज्ञ. — ( L. 334 ) G7 हितकाम्य ( for हितकाम ). — Before line 344, G7 ins. व्यासः. Before line 346, G7 ins. अगस्त्यः. Before line 350, G7 ins. व्यासः. Before line 352, G7 ins. नारदः. — ( L. 354 ) M5 पूर्वं भो ( for वृषभो ). — ( L. 355 ) G7 वर्षकोटिं ( for °कोटी ). — ( L. 360 ) M5 पावकान् ( for °कः ). — ( L. 364 ) G7 तत्र तेत्मा न संश्रेयः ( for the prior half ). G7 पूर्व- ( for तव ). — After line 368, G7 ins. :

